* श्रीः *

हरिदास-संस्कृत-ग्रन्थमाला

१४६

॥ श्रीः ॥

( सामवेदीया )

# उपाकर्म-पद्धतिः

स्नानविध्युपाकर्मादि विविधपरिशिष्टालङ्कृता ।

प्रकाशकः—

जयकृष्णदास-हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज आफिस,

बनारस सिटी ।



वि० सं० १९९८ ] १९४१ [ मूल्यं ८ आणकाः

# सूचना ।

अस्यां श्रीसामवेदीयोपाकर्मपद्धतौ आदिमपृष्ठे निर्दिष्टस्नानविधि-ब्रह्मयज्ञादिप्रयोगोऽस्मत्प्रकाशिते 'सामवेदीयाह्निके' ( पृ० ९ तः ५२ पर्यन्तं ) जिज्ञासुभिर्द्रष्टव्यः ।

विशेषस्तु—उपाकर्मणि, उत्सर्गे च स्नानब्रह्मयज्ञादनु, ऋषिपूजनात्प्राग्विष्णुपूजनमाचारात्कर्तव्यम् ।

---

नोट—आवश्यक होते हुए भी स्नानविधि तथा भासादि साम इस पद्धतिमें छोड़ दिये गये हैं, इसका कारण यह है कि उसके पूर्व ही "सामवेदीय आह्निक" प्रकाशित किया जा चुका है। अतः इस "उपाकर्मपद्धति" के साथ "सामवेदीय आह्निक" भी लेना ग्राहक न भूलें ।

## अस्मत् प्रकाशित वेद-कर्मकाण्ड ग्रन्थाः ।

THE

HARIDAS SANSKRIT SERIES

146

श्री

( सामवेदीया )

# उपाकर्म-पद्धतिः ।

( स्नानविध्युपाकर्मादि विविधपरिशिष्टालङ्कृता )

सा च

श्री काशीस्थ जोखीराम मटरूमल गोयनका संस्कृतमहाविद्यालयाध्यापकेन

त्रिपाठ्युपाह्व दुर्गादत्तशर्मणा

सम्पादिता ।



SĀMAVEDĪYA

# UPĀKARMA PADDHATI

Edited by

PT. SRI DURGADUTTA TRIPATHI.

PUBLISHED BY

JAYA KRISHNA DĀS HARI DĀS GUPTA

*The Chowkhamba Sanskrit Series Office,*

Benares City.

1941.

॥ श्रीहरिः ॥

# निवेदन

'श्रीसामवेदीयसुबोधिनीपद्धति' का प्रकाशन करते हुए सोचा गया कि उसमें से 'उपाकर्मप्रकरण' को उन लोगों के हितार्थ, जो ऐसे स्थान में रहते हैं जहां योग्य विद्वान् उपाकर्म कराने के लिए नहीं मिलते किन्तु श्रद्धालु एवं आस्तिक होने के कारण स्वयं पुस्तक के आधार पर उपाकर्म करना चाहते हैं पर साथ ही समस्त 'सुबोधिनीपद्धति' खरीद नहीं सकते, अलग से प्रकाशित किया जाय। तदनुसार कुशण्डि आदि कुछ आवश्यक विषयों को और जोड़कर यह 'सामवेदीय उपाकर्मपद्धति' प्रकाशित की गयी है। आवश्यक होते हुए भी स्नानविधि तथा भासादि साम इसमें छोड़ दिये हैं। इसका कारण यह है कि इसके पूर्व ही 'सामवेदीय आह्निक' प्रकाशित किया जा चुका है और उसमें उपर्युक्त दोनों विषय आ गये हैं। अतः इस 'उपाकर्मपद्धति' के साथ 'आन्हिक' लेना ग्राहक न भूलें। इन दोनों पुस्तकों को पास रखकर कोई भी व्यक्ति बड़ी सरलता से उपाकर्म कर एवं करा सकता है।

आवश्यक समझकर इसके अन्त में एक 'परिशिष्ट-प्रकरण' जोड़ दिया गया है। इसमें पहले जो सङ्कल्प दिया गया है उसे उपाकर्म के प्रारम्भ में करना चाहिए। उपाकर्म एवं उत्सर्ग में ब्रह्मयज्ञ के उपरान्त विष्णुपूजन आवश्यक है अतः न्याससहित षोडशोपचार पूजन के मन्त्रों को भी 'विष्णुपूजन' प्रकरण में दे दिया है। इसी के साथ अन्त में ऋषिपूजन में न्यास का प्रकार दिखलाया गया है, जिन्हें पाठक ध्यानपूर्वक देख लें। इसके उपरान्त जो अग्निहोत्री नहीं हैं, ऐसे लोगों के लिए कर्तव्य तर्पणविधि दी गयी है। निरग्निक लोगों को उसी के अनुसार प्रतिदिन तर्पण करना चाहिए। आगे स्नानविधि का आधारभूत परिशिष्टसूत्र दे दिया गया है। इसके उपरान्त 'उपाकर्मपरिशिष्ट', 'कर्मप्रदीपोक्त उपाकर्मप्रकरण', 'प्रौष्ठपदीपरिशिष्ट' तथा महर्षि गोभिलप्रणीत सूत्र में से उपाकर्मोत्सर्गप्रकरण के १३ सूत्र भी दिये गये हैं। सुबोधिनीकर्ता श्रीशिवराम

शुक्ल के ग्रन्थों में 'गृह्यकारिका' नामक 'गोभिलीयगृह्यसूत्र' पर पद्यबद्ध एवं 'कृत्यचिन्तामणि' नामक भाष्य है जो अभी तक अप्रकाशित है, उसमें से 'उपाकर्मकारिका' एवं 'उपाकर्मनिर्णय' नाम के प्रकरण भी उपयोगी होने से जोड़ दिये गये हैं। अन्त में काशीस्थ वृद्ध सामवेदी श्रीखराशंकरजी से प्राप्त एक हस्तलिखित 'उपाकर्मणि मलमासविषयो निर्णयः' भी प्रकाशित किया गया है। इस तरह ग्रन्थ की उपयोगिता बढ़ाने का यथामति प्रयत्न किया गया है जिससे यदि पाठकों को कुछ भी लाभ हुआ तो परिश्रम सफल समझूंगा।

सम्भव है कि स्वाभाविक बुद्धिदोष से इस ग्रन्थ में अनेक त्रुटियां रह गयी हों, उन्हें विद्वान् पाठकगण कृपया सूचित कर अनुगृहीत करें जिन्हें अग्रिम आवृत्ति में सुधार किया जा सके। इसके प्रकाशन में ग्रन्थसाहाय्य, उपयुक्त सूचनाप्रदानआदि द्वारा जिन जिन विद्वानों ने कुछ भी सहायता की है उनका अत्यन्त ऋणी हूं।

वर्तमान महर्घता के समय में प्रकाशक महोदय की उदारता एवं उत्साह से ही इसका प्रकाशन सम्भव हुआ है। यदि विद्वद्गण एवं श्रद्धावान् आस्तिक पुरुषों ने इन ग्रन्थों का प्रचार कर उत्साह बढ़ाने का प्रयत्न किया तो सामवेद के अन्यान्य अत्यन्त उपयोगी महत्वपूर्ण कई दुर्लभ ग्रन्थ जिनके प्रकाशन का विचार किया जा रहा है शीघ्र ही प्रकाशित किये जा सकेंगे। प्रकाशक श्रेष्ठि महोदय को इस सत्प्रयत्न के लिए सामवेदीय जनता की ओर से आशीर्वाद प्रदान करते हुए श्रीजगन्नियन्ता परमेश्वर से प्रार्थना करता हूं कि प्रकाशक की सद्बुद्धि, सदिच्छा एवं सत्प्रयत्न में उत्तरोत्तर उत्साहपूर्वक वृद्धि प्रदान करें।

विद्वद्विधेय—
दुर्गादत्त त्रिपाठी

# श्रीसामवेदीयोपाकर्मपद्धतिस्थविषयाणां—

# सूचीपत्रम् ।

# कुशण्डीबोधकपत्रकम् ।

पूर्वं

स्थण्डिलम् २४ अंगुलानि

उत्तर

पात्रासादनम्—

- ० पूर्णपात्रम्
- ० उष्णोदकम्
- ० उपवीतम्
- ० दधि
- ० धानाः
- ० रक्षाः
- ० स्रुवः
- ० संमार्गकुशाः
- ० समिद्द्वयम्
- ० आज्यस्थाली
- ० आज्यम्
- ० इध्मा २०
- ० वर्हिः
- ० उदकपात्रम्

० प्रणीता

१॥ अं. सौमी—पीता ७ अं०

ऐन्द्री—नीला ७ अं०

प्राजापत्या—कृष्णा १२ अं०

पार्थिवी—श्वेता ७ अं० १२ अं०

अं. १॥

आग्नेयी—रक्ता २१ अं०

१ हस्त

ब्रह्मासनम्

दक्षिण

० सोदकपात्रम्  ० स्रुवः  ० साज्यस्थाली

कर्त्रासनम्

पश्चिम

० ब्रह्मासनात्तृणप्रक्षेपस्थलम्

## अथ

# श्रीसामवेदीयोपाकर्मप्रयोगः ।

तत्र भाद्रपदमासी हस्तनक्षत्रे सशिष्यः प्राङ्मुखोदङ्मुखो वा ग्रामान्निष्क्रम्य, नास्यूर्द्ध्वप्रमाणं नद्यादिप्रशस्तजलाशयतीरं गत्वा, जलेन तटं संशोध्य, तस्मिन्शुचौ देशे मृत्तिलकुशगोमयाक्षतान्यासादयेत् । ततः पञ्चमृत्पिण्डोद्धरणादि आन्हिकप्रकरणोक्तप्रकारेण स्नानविधिना स्नात्वा, तर्पणं विधाय, नद्यादेस्तीरे प्राक्प्रवणमुदक्प्रवणं वा स्थण्डिलं कृत्वा गोमयेनानुलिप्य, गन्ध-पुष्प-पत्राक्षत-धूप-दीप-नैवेद्यादीन्पूजासम्भारांस्तत्र संस्थाप्य, यज्ञियवृक्षजं पीठं सकुशं प्रागग्रं उदगग्रं वा तत्र संन्यस्य, तस्मिन्पीठे द्वादश दर्भवटून् संन्यसेत् ।

ततं आचम्य प्राणानायम्य, गायत्र्याभिमन्त्रितेनोदकेन उपहारान्संप्रोक्ष्य, देशकालौ सङ्कीर्त्य, "छन्दसामाप्यायनपूर्वकमयातयामत्वसर्वारिष्टनिवृत्तिसकलमङ्गलावाप्तिकामो वेदोपाकरणकर्माणि गौतमादिसप्तर्षीणां अरुन्धतीप्रवचनकर्तृगोभिलाचार्यगणपतिदुर्गासहितानां(१) पूजातर्पणादिकमहं करिष्ये" इति सङ्कल्प्य, ऋष्यादीनामावाहनं कुर्यात् । इमामिन्द्रेति गौतमोऽनुष्टुप् गौतमः आवाहनस्थापने विनियोगः । इति सर्वत्र । इमामिन्द्रेति

---

(१) केषाञ्चिन्मते अरुन्धतीगणेशगोभिलाचार्यप्रवचनकर्तृदुर्गाः इति क्रमो विवक्षितः ।

साम पठित्वा "गौतम इहागच्छेह तिष्ठेति" आवाहनस्थापने कुर्यात्। यथा-

५ ४ ३२३ ५ २२१२१ २ १ ^ ३ २^
इममिन्द्रसुतम्पिबा। ज्येष्ठाममा। तिर्यमद्वार२म्। शुक्रा।
३२ ५ २ र १२^ ३२२^ ३२ ५
औहो २३४ वा। स्यत्वाऽभ्यक्षरन्। धारा। औहो २३४ वा।
३ २^ ३२ ५ ४ ४
ऋता। औहो २३४ वा। स्यसा ६ दनाइ। हो ५ इ। डा॥ गौतम इहागच्छेह तिष्ठ।

अग्निं दूतेति भरद्वाजो गायत्री भरद्वाजः आवाहनस्थापने विनियोगः।

५ र २ १ र र २ २१र
अग्निं दूताम्। वृणी महाइ। होतारा२३रुवी। श्ववेदसाम्।
१ २ १ २ र२ १ २ १ २
अस्यया २३ ज्ञा। आ। औ ३ होवा। स्यासुक्रतुम्। इडा २३ भा
१
३४३। ओ २३४५ इ। डा॥ भरद्वाज इहागच्छेह तिष्ठ। (१)

असाविसोम इति विश्वामित्रोऽनुष्टुप् विश्वामित्रः आ-

---

(१) आत्वासहेति भरद्वाजो बृहती भरद्वाजः आवाहन०।
५र र २ १ २ — १ २ ५ र र
आत्वा सहा। स्रमाशा १ ता २ म्। यूक्तारथे हिरण्यये।
१ ५ — १० २ २ १ २ — १
ब्रह्मायू १ जा २ः। हारयायि। द्रकायिशा १ यिना २ः। वहा
२ १ ^ ३ ५र र ३ ५
न्तू १ सो २३। मा २ पा २३४ औहो वा। ता २३४ ये॥ इति केचित्।

३ ४२ ३२४५ २ २ ३ ५
वाहनस्थापने वि० । असाविसोमइन्द्रते । शाविष्ठा २३४ धृ।
२ १ २ २ १ २२ १ २ १ ^ ३
ष्णो ३ आगा ३ ही । आत्वापृणा २३ हा ३ । क्तुई २ न्द्रा २३४
५ १ २ ^ ३ ५ ४ ४
याम् । रजाः । सूर्यौं वा ओ २३४ वा । नरा ५ श्मिभीः । हो
५ इ । डा ॥ विश्वामित्रेहागच्छेह तिष्ठ ।

५ २
पिबासुतस्येति जमदग्निर्बृहती जमदग्निः आवाहन० । पिबा-
२ २ — १ — २२ २
सुतस्य रसिनोमत्स्वाहाउ । नाऽः । इन्द्रा २ गोमता २३ः । हाउ ।
२ १ २५ १ २ १ ७ — २ २ २ २ १
आपिर्नोऽ२ बो । धिसाधमाऽ२ । दियबृधाऽ२३ । हाउ । अस्माऽ६
७ २ ३२ २ ^ ३ ५२ २ २ ३
अवाऽ२३ । हा । तुतेऽ३ होऽ२ । या २३४ औ होवा । धिय ऊ
१ २ १ २
२३४५ ॥ जमदग्ने इहागच्छेह तिष्ठ ।

२ १
इममीति वसिष्ठोऽनुष्टुप् वसिष्ठः आवाहन० । इममी २३ ।
४५४ ५ ४ ५ २ १ ७ — १ २
द्रसुतं पिब । ज्येष्ठाम् । अमाऽर्त्त्यम्मादाऽम् । शुक्रास्यत्वाऽ२ ।
१ ^ ३ ५ १ २ ३ ५ १ २ ३ ५
भियाऽक्षा २३४रान् । धाराओ २३४ वा । आर्त्ताओ २३४ वा ।
४ ४
स्यसा ५ दनाइ । हो ५ इ । डा ॥ वसिष्ठेहागच्छेह तिष्ठ ।

५
कश्यपस्येति कश्यपोऽनुष्टुप् कश्यपः आवा० । कश्यपस्यसु-
५ १ २ २ १ २ ३ ४२ ३ ५
वर्विदाऽ६ ए । यावाहुः स । युजावाऽ१ इतीऽ२३४ । ययोर्विश्वमपि ।

३२ १ २ २ १ १ ^ ३ ५२ र
व्रता३म् । यज्ञान्धी३रा: । निचा२३ । आ२ या२३४ औहोवा ।
२ ५
ऊ२३४पा ॥ कश्यपेहागच्छेह तिष्ठ ।

५ २ १२
बृहद्वयेति अत्रिरनुष्टुबत्रिः आवाहन० । बृहद्वयाः । हिमाना
२ १ २र १र१र २ १ २ १ २ ७
२३ वाइ । आर्चादेवा । य अग्ना २३ या इ । यं मित्रन्न । प्राश-
— १ २ २ ४ ५ ४ ५
स्ताया २ इ । मर्त्तासो ३ दा ३ । धिरोवा । पू ५ रो ६ हाइ ॥
अत्रे इहागच्छेह तिष्ठ ।

३ २
इम ँ स्तोममिति कुत्सो जगत्यरुन्धती आवाहन० । इम ँ
३ ५ २ ^ ३ ५ १ २र १ २ १ ३ २
स्तो २३४ माम् । अर्हाते २३४ जा । तावेदसे ३ । होइ । रथा-
३ ५ २ ^ ३ ५ १ २ र १ २ १ ३ २
मी २३४ वा । सम्माहे २३४ मा । मानीषया ३ । होइ । भंद्रा-
३ ५ २ ^ ३ ५ १ २ १ २ २
ही २३४ नाः । प्रमाती २३४ रा । स्यास ँ सदे ३ । होइ ।
३ २ ३ ५ २ ३ ५ १ ५ १ २
अग्नाइसा २३४ ख्याइ । माराइषा २३४ मा । वायन्त वा ३ ।
१
हो २३४५ इ । डा ॥ अरुन्धति इहागच्छेह तिष्ठ ।
२
इष्कर्तारमध्वरेति अग्निः पङ्क्तिः प्रवचनकर्ता आवाहन० । इष्क-
१र २ १ र २ ५ १ २ १ २ १ र २ १
र्त्तारम । इडा । सुवः । इडा । ध्वरस्य प्रचे । इडा० । तसङ्क्रय-
५ र २र १ र २ १ र २र १र २
न्तम् । इडा० । राधसोमहः । इडा० । रातिं वामास्य । हा ३१.

२ १ २ २ १ २
उवा २३ । सुभगांमाहिम् । हा ३१ उ वा २३ । इयं दधासि ।
२र १ २
हा ३१ उवा २३ । सानसि ऽँ रायिम् । हा ३१ उवा २३ ।
३ ५ २ ३ ५
सू २३४ वाः । इह । हा ३१ उवा २३ । ज्यो २३४ तीः॥
प्रवचनकर्तः इहागच्छेह तिष्ठ ।

४ ५
हावास्मेति सोम उष्णिक् गोभिलः आवाहन० । हावास्मा ।
३ ५ २^३ ५ १ ^ ३
ऽया २३४ न्त्वा । वासुत्री २३४ दाम् । अभा २ यिवा २३४
५ २२^३ ५ ३ ५ १र २ र १ २ ३ र १
णीः । अनाओ २३४ वा । षा २३४ ता । गोभिष्टेत्र । णमभिवा
२ र ३
२३ । सयामसिहो २३४५ इ । डा ॥ गोभिल इहागच्छेह तिष्ठ ।

५र
आतून इति गौरीवितिर्गायत्री गणपतिः आवाहन० । आ-
र २ १ २ १ २र १ २ १
तूनआ । द्रक्षुमा २३ न्ताम् । चाइन्नङ्गापा २३ ऽँ हाइ । सङ्गृ
— १ २र ३ १ १ — १ १
२ भाया । महाहस्तो २३४ हाइ । दक्षा २ इणाइना । महा २३ ।
^ ३ ५र र २ २ १ १ १
हा २ स्ता २३४ औहोवा । दक्षिणे ३ ना २३४५ ॥ गणेश
इहागच्छेह तिष्ठ ।

५ ४र ५
उभेयदिन्द्र इति श्येनो जगती दुर्गा आवाहन० । उभे यदि-
४र ५ ४ १ २ १ २ २ ३ २
न्द्ररोदसाई । आ २३ पा । प्राथ उषा ३१ उवा २३ । इव आ ।
१र १ २ ३ १ २ २ १ २ २
महातं त्वा माहाइनाम् । संम्रौ २ हो । जञ्चर्षणा ३१ उवाये २ ।

२ २ २१२ २ — १ २ २
ना ३ मा । देवी जनित्रियाजी १ जाना २ ३ । भद्रौ ३ हो ।
१ २ २ २
जानित्रिय जा ३१ उवा २३ । ए ३ । जनदा ३१ ॥ दुर्गे इहा-
गच्छेह तिष्ठेति ।

एवमावाहनस्थापने कृत्वा अक्षतानादाय, वाक् मन इति
२
मित्रावरुणौ गायत्री प्राणः प्रतिष्ठाकरणे विनियोगः । ॐ वाक् ।
२र१ २र१र २र१र २ १ २ १ २ १ २ १ २ १र २ १
मनः प्राणः प्राणोऽपानो व्यानश्चक्षुः श्रोत्रꣳशर्म वर्म भूतिः प्रतिष्ठा ।
एता एव समहाव्रताः सर्वा वा एता विराजो दशिनी प्रथमा
विꣳशिनी द्वितीया त्रिꣳशिनी तृतीयैषा वै परमा विराड्यच्चत्वारिꣳ
शद्दात्रयः पङ्क्तिर्वै परमा विराट् परमायामेव विराजि प्रतितिष्ठन्ति ।
गौतमादिसप्तर्षयः अरुन्धतीप्रवर्चनकर्तृगोभिलाचार्यगणेशदुर्गास-
हिताः सुप्रतिष्ठिता वरदा भवन्त्वित्युच्चार्याक्षतान्प्रक्षिपेत् । (१)

ततः प्रणवादिचतुर्थ्यन्तनमोन्ततत्तन्नामप्रमन्त्रैः प्रत्येकं पूजा
कार्या । ऋषिर्विप्रेत्युशना त्रिष्टुप् ऋषयः पूजने विनियोगः ।
२ २ १ २ ३ १र २र ३ २ ३ २ ३ २ ३ १ २ १ २
"ॐ ऋषिर्विप्रः पुर एता जनानामृभुर्धीर उशना काव्येन । साचि-
३ १ २ ३ १ ३ २ ३ ३ २ ३ १ २
द्विवेद निहितं यदा सामपीच्य ३३ गुह्यं नामगोनाम् ।" इति
मन्त्रेण "गौतमाय नमः इति" च "आसनं समर्पयामि"(२) । एवं

---

( १ ) अत्र ऋषिर्विप्रेति मन्त्रेण स्वस्य ऋषीणां च षोडशा-
ङ्गेषु न्यासं कुर्यादित्याचारः ।

(२)आसनं । को अद्येति अमहीयुस्त्रिष्टुप् कः सूर्यो वा

पाद्यं(१), अर्घ्यमाचमनीयं(२), मधुपर्कं, पुनराचमनीयम्। ततः स्वस्वमन्त्रैः पञ्चामृतेन स्नपनम्।

५ ४
चक्रं यदस्येति अथर्वा विराडिन्द्रः पयःस्नाने वि०। ॐ चक्रं

---

५ २ २ ५ १ २
आसने विनि०। कोअद्ययुङ्क्ते धुरिगाऋतस्या ६ ए। शिमी-
२ २ २ २ १ २ २२ १ २ २ २ २ २ १ २
वतोभा मिनोदुर्हणा २३ यून्। आसन्नेपामप्सुवाहोमयो २३ भून्।
१ २ २ २ २ २ २̂ ५
यएषां भृत्यामृणधत्सजाई वा ३ उवा ३। ऊ ३४ पा॥
२ २ २ २ १ २ २ ^ ३ ५ २ १
(१)पाद्यं। पदंदेवा। औहोहाई। स्यामाइहू २३४ षाः। अना-
५ १२ २ २ ३२ ४२ ५ १ ३ ५
धा २३४ हा। छा भिरूता ३४। औहो वा। इहा २३४ हाइ।
२ ^ ३ ५ २ १२ २२ १२ ७ २ २ ३२ ४२ ५ १ ३
उहुवा २३४ धीः। भद्रामु। याईवोपा ३४। औहोवा। इहा०।
३२ २ ५२ ६ ४
औहो ३१२३४। हूक्। एहिया ६ हा। हो ५ ऽइ। डा॥

(२)अर्घ्यस्य। आघायेत्यस्यध्मवाहो गायत्र्यग्नीन्द्रौ अर्घ्य-
५२ २ २ ४ ५ २ १ २
दाने विनि०। आघाये अग्निमिन्धाताई। स्तृणन्ति बर्हिरानु-
२ १२ १२ २ १ १ ५ ४
षाक्। येषामिन्द्रोयुवा इहा। ऊवाइ। ऊवो २३४। वा। सा ५ खो
५ ५ २ ४ ५ १ ^ ३ २̂ ३
६ हायि॥ आचमनीयं। तद्वौहोवा। गाया २। सुताइसा २३४
५ १ १२ २ २ १ २ — १ २ २
चा। पुरुहूता। यसात्वा १ ना २ यि। शंयत्। हा। औ ३ होइ।
३ ५ १ ^ ३ १२ २ २ २
गा २३४ वाइ। ना २ शा २३४ औहोवा। ए ३। किने २३४५॥

५ २ ४ २ ५ ४ २ १२ २ २ १ २ २
यदस्याप्सुवानिषत्ताम् । उतोतदस्मैमध्विच्चच्छा २३ द्यात् । पृथि-
२२ २१ २ १ २ २ १ २ १२ २२
व्यामतिषितंयदू २३ धाः । पयोगो २३ षू । आदध्याओषधीषु ।
१ २ १
इडा २३ भा ३४३ । ओ २३४५ इ । डा ॥ इति गौतमादिभ्यो
दुग्धस्नानम् ।

दधिक्राव्ण इति अग्निरनुष्टुप् दधिक्राव्णः दधिस्नाने
५ ५ ४२ ५२ २ ४ १
वि० । ओहाइ । दधिक्राव्णो अकारिषं । ओहाइ । ओहाइ ।
२ २ २ १ ५ १ २ २ १२ २
जिष्णोरश्वस्य वाजिना २३ होइ । सुरभिनो मुखाका २३ रात् ।
२ २ १ १ २ २२ २
प्रना २३ होइ । आयू २३ हो । षितारा २३ इषा ३४३ त् ।
१
ओ २३४५ इ । डा ॥ इति दधिस्नानम् ।

घृतवतीति वरुणो जगती द्यावापृथिव्यौ घृतस्नाने त्रिनि० ।
४ ३ ५ ४ २ ३ ४२ ५२ ५ २ १ २ २ २
घृतव । ता ३ इ भुवनानाम् । अभिश्रिया । उर्वीपृथ्वीमधुदुघेसुपे-
१ २ १२ २ २२ १ १
शसा २३ होइ । द्यावापृथिवीवरुणा । स्याधर्मणा २३ होइ ।
२ १ २ १ २२ १२ २ २
विष्कभा २३ इते । आजरे । भूरि । राये ३ । तसाउवा
२ १ २ १ २ १२ २र ३ १११
३ । ए ३ । इन्दुः समुद्रमुर्वि या विभाती २३४५ ॥ इति घृत-
स्नानम् ।

सपूर्व्यो इति प्रजापतिरनुष्टुप् इन्द्रः मधुस्नाने त्रि० ।
५२ २ २ ५ २२ १ २ २ २ २
सपूर्व्योमहोना ३ मे । वेनः क्रतू ३ भाइरानजे ३ । हा ३ हा ।

५ २ २ १ — २ २५२ १ २
औ ३ हो ३ वा। आयिही २। यस्य द्वारा ३ मानुष्पिता ३।
२ २ ५ २ २ १ — १ २ २ २
हा ३ हा। औ ३ हो ३ वा। आयिही २। दोइत्रेषु घा ३। हा ३
२ ५ २ २ १ — २ १ ^ ३
हा। औ ३ हो ३ वा। आयिही २। यआ २३। ना २ जा
५२ २ २ १ ३ १११ १
२३४ औ होवा। मधुश्चुता २३४५: ॥ इति मधुस्नानम्।

रसन्तेति इषोवृधीयो गायत्र्यथर्वणौ शर्करास्नाने वि०।
५ २ २२ १ २ १ — २ १ २ १
रसन्तेमाइ। त्रो अर्यमा। पिबन्तुवा २। रुणः कवाइ। पवमाना
— २ १ १ ^ ३ ५२ २ २ १२ २
२। स्यम। रु २ ता २३४ औहोवा। इषोवृधे १ ॥ इति शर्क-
रास्नानम्।(१)

अपां व्रतस्यापस्त्रिष्टुबापो देवता वरुणस्नाने वि०। हाउ।
१२२ २ १ २ २ २२१२ २ २ २
३। ऐरयत्। ३। अपः समैरयत्। ३। भूतमैरयत्। ३। अपा-
२ २ २ २ २ २ २ २ २
ङ्गर्भोऽग्निरिडा। पाङ्गर्भोऽग्निरिडा। २। पृथिव्या गर्भोऽग्निरिडा। ३।
१ २ २ १ २ २२१२ २ १
समन्यायन्त्युपयन्ति या २३ न्याः। समानमूर्वन्नद्यः स्पृणा २३
२ १२ २ २२ १ २ १२ २
न्ती। तमूशुचि ९ शुचयो दीदिवा २३ ९ सास्। अपान्नपातमुप-

(१) त्वमिमा ओषधीरित्यस्य सोमो विराट् सोमः ओषध्या
१ २२ १ २२ २ १ २ १ २१२ २
स्नाने वि०। त्वमिमा ओषधीः सोमविश्वाः। त्वमपो अजनय-
१ २ १ २ २२ १ २ १ २ २२ १ २ २
स्त्वङ्गाः। त्वमाततनोरुर्वन्तरिक्षम्। त्वज्ज्योतिषा वितमो ववर्थ॥

२ १ २ २र १र २ २ १ र
यन्तिया २३ पा ३ः। हा उ । ३। ऐरयत् । ३ । अपः समैर-
२ २१र १ २र र १ र र र
यत् । ३ । भूतमैरयत् । ३ । अपाङ्गर्भोंग्निरिडा । पाङ्गर्भोंग्निरिडा ।
२ र र र २ र र १
२। पृथिव्या गर्भोग्निरिडा । २ । पृथिव्या गर्भोग्निरिडा ३ । हाउ-
२ २ १ २ १ र २ १ २ १ २र र
वा । ए । अग्निः शिशुकः । ए । शुक्रः शिशुकः । ए । तेजः
२ १ २ १ २र १र २ १र र २ २र १ २ १ ३२ १ २र
शक्रस्य शर्क । ए । तेजः सम्राः समीचीः । ए । तेज उषोन जा
१ २र १ र ३ २ १ १ १
रः । ए । सुवर्ज्योती २३४५ः ।। इति शुद्धोदकस्नानम् ।
२ १ २ १
ऋषिर्विप्रेति आचमनीयम् । वस्त्रम्—अभिवस्त्रा । सुवस ।
२̂ ३ ४ ५ २ १ २१र २̂ ३ ४ ५ २ १
नानियर्षा । अभिधेनुः । सुदुघाः । पूयमानाः । अभिचन्द्रा ।
२१र २̂ ३ ४ ५ २ १ २१ २
भर्तवे । नोहिरण्या । अभियश्वान् । रथिनः । दा ३४३ यि ।
२ ४
वा ३ सो ५ मा ६५६ ॥

यज्ञोपवीतमन्त्रः । यज्ञोपवीतमिति मन्त्रस्य प्रजापतिस्त्रिष्टुप् छन्दः यज्ञोपवीतदेवता, यज्ञोपवीतमसीति प्रजापतिर्यजुः यज्ञोपवीत-देवता यज्ञोपवीतदाने वि० । ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्स-हजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः । ॐ यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि ।(१)

---

(१)यज्ञोपवीतम् । ब्रह्मजज्ञानमिति ऋज्रुस्त्रिष्टुप् ब्रह्मा

ततश्चन्दनम् । अर्चतेति प्रियमेधानुष्टुबिन्द्रः, अर्चन्त्यर्कमिति मरुतस्त्रिष्टुबिन्द्रः, गायन्तित्वेति शिखण्ड्यनुष्टुबिन्द्रः गन्धदाने
२ २ ^३ ९ २ २ ४ २ ३ ६
वि० । अर्चतप्रार्चताना २३४ राः । प्रियमेधा ३ सो ३ अर्चत ।
२ १ ४ २२३ ५ १ ३ २ २
अर्चन्तु पू २३ आ ३ काउत । पुरमिद्धा २३ । ष्णुवा ३ र्चा ६
४ ५ ४ १ ५ १ २ १ २२
ता ६५६ ॥१॥ अर्चन्तिया । कंमरुतः सुवा २३ र्काः । आस्तो-
२ २ २२ २ २ २ २ ५
भताइ । श्रुतोयुवास आयिन्द्रा ३ उवा ३ । ऊ ३४ पा ॥ २ ॥
३ २ ३ २ ४ ५ २ २ ३ २
गाया ३१ । तित्वा ३१२३४ । गाय । आ ३ यिणाः । अर्चा ३१ ।
३ २ ४ ५ २ २ ३ २ ३ २
तिया ३१२३४ । कम । का ३ यिणाः । ब्रह्मा ३१ । णस्त्वा
४ ५ २ २ ३ २ ३ २
३१२३४ । शत । क्रा ३ ताउ । उद्वा ३१ । ञमा ३१२३ यि ।
४ ४ ५ ४ ५२
वर्या ५ यि मिरायि । हो ५ इ । डा ॥ ३ ॥ गायन्तित्वोहाइ ।
३ २ ३ ९ १ २ २ २ २ ^३
गायात्री २३४ णाः । अर्चन्त्यर्कमा १ र्की ३ णाः । अर्चन्तियो

---

१ २ २ १
यज्ञोपवीतदाने विनि० । ब्रह्मा । ब्रा २३ ह्मा । जज्ञानम्प्रथमम्पुरा-
२ १ २ २२१ २ २
स्तात् । विसाई । वा २३ ईसी । मतः सुरुचोवेनआवः । सबू ।
२ २ २ १ २ १
सा २३ बू । धिया उपमा अस्य वायिष्ठाः । सताः । सा २३
२ २ १ २ १
ताः । चयोनिमसतश्चवाई वा ३४३ः । ओ २३४५ ई । डा ॥

२३४ हा । कमार्की २३४ णाः । ब्रह्माणस्त्वाशता १ क्रा ३ तो । ब्रह्माणस्त्वो २३४ हायि । शताक्रा २३४ ताउ । उद्व ९ शमिवया १ ईमी ३ रे । उद्व ८ शमो २३४ हायि । वया ३ यिमा ५ यिरा ६५६ यि ॥४॥ गायन्तित्वा गायत्रिणआ । अर्चन्त्यर्कमर्का २३ यिणाः । ब्रह्माणस्त्वा २ हो १ यि । शतक्रा २३ ताउ । उद्व ९ शमिवया १ यिमी ३ रे । उद्व ९ शा २३४ मी । वाया ३ उवा ३ । उप । मा ऽ २ यिरो ३५ हाइ ॥ ५ ॥

अक्षन्नमीमद इति यमः पङ्क्तिः पितरः अक्षतदाने वि०। अक्षन्नमीमद । तही १। आ २३४। वप्रिया अधू। षता। अस्तोषतस्वभानवः। विप्राना २३ वी। ष्ठायामती। योजानु ३ वा ३ यि। द्रा २ ता २३४ औहोवा। हा २३४ री॥ इति साम्ना अक्षतान् समर्पयामि।

पवित्रन्त इति आदित्यो जगती ब्रह्मणस्पतिः पुष्पदाने वि०। पवित्रन्तेविततं ब्रह्मणस्पते ३ । हुवे २३ । हुवे २३ । होवा ३ हा ३ । हायि । प्रभुर्गात्राणि पर्येषि विश्वता २३ः । हुवे० । अंत-

२ २१ ९ १२ ३१ १ २११२१ २ १ ९
ष्ठतनूर्नतदा २ मो अश्नुते ३ । हुवे० । ऋतासइद्धहन्तः सन्तदा
१ १ १२ २ २ ५१
२ श्रत । हुवे २३ । हुवे २३ । होवा ३ हा ३ । हा ३४ । औ-
२ २१२ २२९ १ ९ ३ ११११
होवा । अर्को देवाना २ म्परमेव्रियो २ मा २३४५ नू । अर्कपुष्पं
अपश्यन्वै देवा अर्क इति वदन्ति रसमस्य पुष्पमिति सरसमेवा-
न्नाद्यमवरुन्धेऽर्कपुष्पेण तुष्टुवानः ॥

२२ १
त्वेषास्तेति यमोऽनुष्टुबग्निः धूपदाने त्रि० । त्वेषास्ते २३
४२ ९ २ १ २ ४ २
धूम ऋणवति हाउ । दिविसञ्छुक्रा ३ आतता ३ः । सूरोनहि
५ २ १ २ ४ २ ५ २ १२ २
हाउ । द्युतातूवा ३ मू । कृपापवा हाउ । करोचा २३ सा ३४३
१
यि । ओ २३४२ इ । डा ॥

पवमानो अजीजन इति वसिष्ठो गायत्री वैश्वानरः दीपदाने
४ ५ १२ ३ २ २ ९ २ १
वि० । पावा । मानो । अजीजा २३४ नात् । दिवश्चित्राम् ।
२ १ १९ २२ १ १ ^ २ ५१ २ ३
नतन्यतुम् । ज्योतिर्वैश्वा २३ । ना २ रा २३४ औहोवा । बृ
५
२३४ हात् ॥(१)

---

(१) दीपं । दिवया ओवा इति विश्वेदेवास्त्रिष्टुबिन्द्रः दीपदाने० ।
१ २२ १ २ ९ २ २ १ २ १२
दिवया । ओवा । औ ३ हो ३ वा । उदुब्रह्मा । णी २ ऐर ।
२१३४ ५ २ १ २ १ २३४५ २१ १२
तश्रवस्या । इन्द्रं ३ समा । यें ३ मह । यावसिष्ठा । आयो विश्वा ।

२र १
फलेति कश्यपस्त्रिष्टुबिन्द्रः फलदाने० । हाउ । ३ । फाल्फ
२ २र १ रर र — १
ल्फल्फल्फल्फल् । ३ । हाउ । इन्द्रनरोनेमधि ताहवा ३ न्ताइ ।
२ र र र — १ र र र र — १
यत्पार्यायुनजतेधिया २ स्ताः । शूरो नृषातात्रवसश्चका २ माइ ।
र र र र — १ २र १ २
आगोमति व्रजेभजातुवा २ न्नाः । हाउ । ३ । फाल्फल्फ-
१ १ १ १ १
ल्फल्फल्फल् ।·३ । हाउ । ३ । वा । मनः सुवारिडा २३४५ ॥
४र
अहमन्नेति दिशोऽनुष्टुप् विश्वेदेवाः नैवेद्यदाने वि०। हाउ ।३।
२ १ २ १ ४र १ १ २र १ १ २र १
अहमन्नं । ३ । अहमन्नादो । हमन्नादो । ३ । हंविधारयो । २ ।
१ २र १ २र १ २र १ २ १ १ २ १ ४र १ र २
हंविधारयः । हाउ । ३ । यद्वर्चो हिरण्य । स्या । यद्वा वर्चो गवामु ।
१ २ १ २ १ २र १ १ १र २ १ २र १ २र
ता । सत्यस्य ब्रह्मणो व । चाः । तेन मासꣳ सृजाम । साइ । हाउ ।
२ १ १ ३र १ ५ऽ २ २र २१
३ । अहमन्नं० पूर्ववत् । हंविधारयः । हाउ । ३ । वा । ए । अह-
२१ २र १ २र १ २र २१ र ३ २ १ १ १
मन्नमहमन्नादोहं विधारयः । ३ । ए । अहꣳसुवर्ज्योती २३४५ः ॥(१)

---

२ १ २ ३ ४ ५ १ २र १ २ ९ २ २
नी ३ श्रव । सा ततानां । दि वया । ओवा । औ ३ हो ३ वा ।
१ र २१र २ २ ४
उपश्रोता । मईव । तो ३४३ । वा ३ चा ५९ सा ६५६ ई ॥

(१)ताम्बूलं । पान्तमाव इति वीतहव्योऽनुष्टुबिन्द्रः ताम्बूल-
४१ ५४१ ६१ ४ ५ ४ २ १ २ १ २ २
दाने० । पान्तमावो अन्धसाः । इन्द्रामाभि । प्रगायाता ३ । हा
२ २ २ १ २ २ २
३ हायि । विश्वासाहम् । शताक्रतु ३ म् । हा ३ हाई । म ९

१ २ २ २ ९ ᐱ ३ ५र९
डायिष्ठञ्श्चा ३ । हा ३ हा । षणा २ यि । ना २३४ औहोवा ।
२ ५
ऊ १२३४ पा ॥

५र४
दक्षिणां । देवो व इत्यग्निर्बृहत्यग्निः दक्षिणादाने० । देवो
२ ४ ५र २र१र २ १२ १२ — २
३ वो ३ द्रविणोदाः । पूर्णांविवष्ट्वासिचं । उद्वा १ सिञ्चा २ । ध्व-
१ २र १ ७ — १र२र १ २
मुपवापृणध्वं । आदिद्वोदे २ । वओहते । इडा २३ भा ३४३ ।
१
ओ २३४५ ई । डा ॥

१ २ १ २ २
नमस्कारं । अधिप । ताई । मित्रप । ताई । क्षत्रप । ताई ।
२ १ २ — — १ १ र र २ १ ९ २
स्वः पताई । धनपता २ ई । ना २ माः । नमोन्नाय नमोन्नपतय
र र १र २र र १र २ १रर१ २ १र २र १ रर १ २ १र
एकाक्षाय चावपन्नादाय च नमोनमः । रुद्राय तीरसदे नमः स्थिराय
२ १ २ र १ २ १ २ र १ र २ १ २ १ २ र
स्थिरधन्वने नमः प्रतिपदाय च पटरिणे च नमस्त्रियंबकाय चक्र ।
१ र २ १ ७र र१र २ र ९ १र २ १ २ १र २
पर्दिने च नम आश्रायेभ्यश्च प्रत्याश्रायेभ्यश्च नमः कृन्येभ्यश्च
१र २ १ २ १ र ७ १ २र १ २ १र २ १ २र
विरिरुफेभ्यश्च नमः संवृते च विवृते च । अव ज्यामिव धन्वनो-
१ र २ ९ २र १ र२ १ २ १ २ ३ २ १
विते मन्युन्नयामसि मृड तान्न इह अस्मभ्यं । इडा२३ भा । यइदं-
र २ १ ३ ५
विश्वरूभूतं । युयो ३ । आउ । वा २३ । ना २३४ माः ॥

नमोऽह्माय मोह्माय मंऽह्माय धून्वते तापसाय पुनर्वसवे नमो
नमो मौञ्ज्यायौर्म्याय सौम्याय शम्याय शिवाय नमो नमः पाराय

२ १ २ २२
उद्यंलोकेति इन्द्रोऽनुष्टुप् सूर्यः आरार्तिके वि० । उद्यंलोका-
२ १ २ १ १ २ २ १ २ १ २ १ २ २२
नरोचयः । होयि । इमां लोकानरोचयः । होइ । प्रजाभूतमरो-
१ १ २ १ २२ १ ^ २ ५ २ २
चयः । होयि । विश्वरूभूतमरोचयः । हो २ हा २३४ औहोवा ।
१२ २ ३ १ १ १ १
घर्मोज्योती २३४५: ॥

ऋषिर्विंप्रेति प्रदक्षिणा, स्तुतिः, नमस्कारः, आशीर्वादश्च ।(१)
२१ १२ २ १ २ २ २ १ २२ १२ २ १ २२
आदित्यैरिन्द्रः सहसीषधातू ३ । इहा । आदित्यैरिन्द्रः सगणो-

---

सुपाराय महापाराय पारदाय पारविन्दाय नमो नमः पुरुषाय सुपुरुषाय महापुरुषाय मध्यमपुरुषायोत्तमपुरुषाय ब्रह्मचारिणे नमो नम इति ।

प्रदक्षिणा । परिकोशं इति भरद्वाज उष्णिक् सोमः प्रद-
२ १ २ ४ ५ १२ २ २ १२ २
क्षिणाकरणे० । परिको ३ शम्मधुश्चुतास् । सोमः पुनानो अर्ष-
१ २ १ ३ २१ १ २१ २ १ २ ^ ३
ति । होये ३ । अभिवा २३४५ । णीऋंषी णा२ स । साना ओ
५ ३ ६
२३४ वा । पा २३४ ता ॥

१ २ १ १ २ २ २ २
(१) आर्षीः । विप्राः पुरएता । जना ३ नाम् । ऋभु-
२ १ २ १ २ ^ २ ३ ४ ५ १ २ ७
र्द्धीराः । उशना । कावियेना । सचिद्विवेदनिहिताम् । यदा २३
२ २ १ २ १ २ १ २ २ ४
साम् । अपायिचियाम् । गुहियम् । ना ३४३ । मा ३ गो ५ ना
६५६ म् ॥

१ २ १ २ १ २२ १२ २ १ २
मरुद्भि ३ः । इहा । अस्मभ्यं भेषजाकरा ३ त् । इहा । ए ३ ।
२ १
भद्रम् । गोतमस्य भद्रं भवत्याशिषमेवास्मा एतेनाशास्ते सामहि सत्याशीरेतेन वै गोतमो जेमानं महिमानमगच्छत्तस्माद्ये च पराञ्चो गोतमाद्ये चार्वाञ्चस्त उभये गोतम ऋषयो ब्रुवते ।

एवं गौतमं सम्पूज्य, भरद्वाजं पूजयेत् एवमेव च, अथवा पदार्थानुसमयेन गौतमादीन् पूजयेत् । तत्रैवं प्रयोगः । गौतमादिभ्यः पाद्यम् । एवं भरद्वाजादिभ्यः । एवमन्ये उपचाराः । धूपदीपनैवेद्यादिकं तन्त्रेण । गौतमादिसप्तर्षिभ्यः अरुन्धतीप्रवचनकर्तृगोभिलाचार्यगणपतिदुर्गासहितेभ्यो धूपं समर्पयामि । एवं दीपादि । एवं पूजां परिसमाप्य, नाभिमात्रे जले सशिष्यास्तिष्ठन्तो ऋजुकुशैर्देवतीर्थेन ऋषीनुच्चैः सिञ्चन्तस्तर्पयेयुः ।

ॐ कारो महाव्याहृतयो गायत्री ब्रह्मा वेदा देवा ऋषयश्छन्दांस्याचार्यास्तृप्यन्तामिति समुदायेन त्रिः सन्तर्प्य, ततः ॐ
२ २
ॐ कारस्तृप्यतु । ॐ भूर्भुवस्वः महाव्याहृतयस्तृप्यन्तु । ॐ तत्स-
३ १-२२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
वितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ।
गायत्री तृप्यतु । सोमꣳ राजानमिति ऋगन्ते–
२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ ३
ॐ सोमꣳ राजानं वरुण मग्निमन्वारभामहे । आदित्यं
३ १ २ ३ २ ३ १ २ ३ १ २
विष्णुꣳ सूर्यं ब्रह्माणञ्च बृहस्पतिम् । ब्रह्मा तृप्यतु ।

अग्न आयाहि दशत्या ऋगन्तैरर्द्धर्चैर्वा सन्तर्प्य, ततो वेदास्तृप्यन्तु ।

२ ३ १ २ ३ १ २ ३ २ ३ १ २ १— २र
ॐ अग्न आयाहि वीतये गृणानो हव्यदातये । निहोता
३ १ २ १२ ३ २ ३ २ ३ १ २ ३ २ ३ २
सत्सि बर्हिषि ॥१॥ त्वमग्ने यज्ञानाꣳ होता विश्वेषाꣳ हितः । देवे-
३ १ २ ३ १ २ ३ २ ३१ २ ३ १ २ ३ १२
भिर्मानुषे जने ॥२॥ अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् ।
३ २ ३१ २ ३ १२ ३ २ ३ १ २ ३ १ २३ १ २
अस्य यज्ञस्य सुक्रतुम् ॥३॥ अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया ।
२ २ ३ १— २र १ २ ३ १ २ ३ ५ ३ १ २
समिद्धः शुक्र आहुतः ॥४॥ प्रेष्ठं वो अतिथिꣳ स्तुषे मित्रमिव
३ २ २ ३ २३ १— २र १ २ ३ १ २ ३ १—
प्रियम् । अग्ने रथं न वेद्यम् ॥५॥ त्वं नो अग्ने महोभिः पाहि
२र ३ १ २ ३ २ ३ १— २र २ ३१— २र ३
विश्वस्या अरातेः । उत द्विषो मर्त्यस्य ॥६॥ एह्यू षु ब्रवाणि
१ २ ३ १.२ ३ १ २ ३ १ २ ३ १ २ १ २ ३ १—
तेऽग्न इत्थेतरा गिरः । एभिर्वर्द्धास इन्दुभिः ॥७॥ आ ते वत्सो
२र ३ १ २ ३ १ २ २ ३ १ २ ३ २
मनो यमत्परमाच्चित्सधस्थात् । अग्ने त्वाꣳ कामये गिरा ॥८॥
१ २ ३ ४ २ ३ १—२र.३ १ २ ३ १— २र ३ १ २
त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः ॥९॥
२ ३ १ २ ३१ २ ३ १ २ ३१ २ ३२ ३ १— २र ३ २
अग्ने विवस्वदाभरास्मभ्यमूतये महे । देवो ह्यसि नो दृशे ॥१०॥
वेदास्तृप्यन्तु ।

एवं उपास्मै गायतेति उत्तराध्यायेन देवास्तृप्यन्तु ।
१ २ ३ १ २ ३ १ २ ३ २ ३ १— २र
ॐ उपास्मै गायता नरः पवमानायेन्दवे । अभि देवाꣳ इय-
३ २ ३ १ २ ३ १— २र ३ २ ३ १ २
क्षते ॥ अभि ते मधुना पयोऽथर्वाणो अशिश्रयुः । देवं देवाय
३ २ १ २ ३ २उ ३ १— २र ३ १—२र १ २ ३ १
देवयु ॥ स नः पवस्व शङ्गवे शं जनाय शमर्वते । शꣳ राजन्नो-

२
षधीभ्यः ॥१॥

२ २ ३ १ ५ ३ १ २ ३ २ २ ३ १—
दधि द्युतत्या रुचा परिष्टोभन्त्या कृपा । सोमाः शुक्रा
२र ३ २ ३ १ २ ३ १— २र ३क २र १ २
गवाशिरः ॥ हिन्वानो हेतृभिर्हित आ वाजं वाज्यक्रमीत् । सीद-
३ १ २ २ १ २ ३ १ २ ३ २ ३ १ २
न्तो वनुषो यथा ॥ ऋधक्सोम स्वस्तये सञ्जग्मानो दिवा कवे ।
१ २ ३ १ २ ३ २
पवस्व सूर्यो दृशे ॥२॥

१ २ ३ २ ३ १ २ १ २ ३ १ २ ३ १
पवमानस्य ते कवे वाजिन्त्सर्गा असृक्षत । अर्वन्तो न श्रवस्य-
२ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २ १ २
वः ॥ अच्छा कोशं मधुश्चुतमसृग्रं वारे अव्यये । अवावशन्त
३ १ २ १ २ ३ १र २र ३ १ २ ३ २ ३ १ २ १ २
धीतयः ॥ अच्छा समुद्रमिन्दवोऽस्तं गावो न धेनवः । अग्म-
३ २ ३ २ ३ २
न्नृतस्य योनिमा ॥ ३ ॥

२ ३ १ २ ३ १ २ ३ २ ३ १ २ १— २र
अग्न आयाहि वीतये गृणानो हव्यदातये । निहोता सत्सि
३ १ २ १ २ ३ १ २ ३ १ २ ३ १ २
बर्हिषि ॥ तं त्वा समिद्भिरङ्गिरो घृतेन वर्द्धयामसि । बृहच्छोचाय
१ २ ३ २ ३ २ ३ १ २ ३ १ २
विष्ठ्य ॥ स नः पृथु श्रवाय्यमच्छा देव विवाससि । बृहदग्ने
३ १ २
सुवीर्यम् ॥ ४ ॥

१ २ ३ १— २र २ ३ १ २
आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा रजाꣳसि
३ १ २ ३ १ २ ३ १— २र १ २
सुक्रतु ॥ उरुशꣳसा नमो वृधा मह्वा दक्षस्य राजथः । द्राघिष्ठाभिः
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १—
शुचिव्रता ॥ गृणाना जमदग्निना योना वृतस्य सीदतः । पातꣳ

सोममृतावृधा ॥ ५ ॥

आयाहि सुषुमा हित इन्द्र सोमं पिबा इमम्। एदं बर्हिः सदो मम ॥ आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना। उप ब्रह्माणि नः शृणु ॥ ब्रह्माणस्त्वा युजा वयꣳ सोमपामिन्द्र सोमिनः। सुतावन्तो हवामहे ॥ ६ ॥

इन्द्राग्नी आगतꣳ सुतं गीर्भिर्नभो वरेण्यम्। अस्य पातꣳ धियेषिता ॥ इन्द्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः। अया पातमिमꣳ सुतम् ॥ इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे। ता सोमस्येह तृम्पताम् ॥ ७ ॥

उच्चा ते जातमन्धसो दिवि सद्भूम्या ददे। उग्रꣳ शर्म महिश्रवः ॥ स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः। वरिवोवित्परिस्रव ॥ एना विश्वान्यर्य आ द्युम्नानि मानुषाणाम्। सिषासन्तो वनामहे ॥ ८ ॥

पुनानः सोम धारयापो वसानो अर्षसि। आ रत्नधा योनिमृतस्य सीदस्युत्सोदेवो हिरण्ययः ॥ दुहान ऊधर्दिव्यं मधु प्रियं प्रत्नꣳ सधस्थमासदत्। आपृच्छयं धरुणं वाज्यर्षसि नृभिर्धौतो

२ ३ २
विचक्षणः ॥ ९ ॥

१—२र ३ २ ३ २३ १ २ ३ १ २ ३ २ ३ १— २र २ ३
प्रतुद्रवपरिकोशं निषीद नृभिः पुनानो अभिवाजमर्ष । अश्वं
१ २ ३ १ २ ३ २ ३ १ २ २ १२ ३ १ २ ३ १ २
न त्वा वाजिनं मर्जयन्तोऽच्छा बर्हिरशनाभिर्नयन्ति ॥ स्वायुधः पव-
३ १— २र ३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २
ते देव इन्दुरशस्तिहा वृजना रक्षमाणः । पिता देवानां जनिता
३ १ २ ३ २ ३ २ ३ १ २ ३ २ २ ३ १ २ ३ १र
सुदक्षो विष्टम्भो दिवो धरुणः पृथिव्याः ॥ ऋषिर्विप्रः पुरएता
२र ३ १—२र ३ २ ३ १ २ १ २ ३ १ २ ३ १ २
जनानामृभुर्धीर उशना काव्येन । सचिद्विवेद निहितं यदासाम-
३क २ २ ३ २ ३ १ २
पीच्य३ गुह्यं नाम गोनाम् ॥ १० ॥

३ १ २ ३ १ २ ३ १ २ १ २ ३ १र २र
अभित्वा शूर नोनुमोदुग्धा इव धेनवः । ईशानमस्य जगतः
३ २ ३ १ २ ३ १ २ १र २र ३ २ ३ १र २र ३
स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ नत्वा वाँ३ अन्यो दिव्योन पार्थिवो
२ ३ १— २र ३ १ २ ३ १ २ ३ १ २
न जातो न जनिष्यते । अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्त-
स्त्वा हवामहे ॥ ११ ॥

१ २ ३ १र २र ३ २ ३ १ २ ३ १ २ २ ३ १ २
कया नश्चित्र आ भुवदूती सदा वृधः सखा । कया शचिष्ठया
३ २ १ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
वृता ॥ कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः । दृढा चि-
३ २ ३ १ २ ३ २उ ३ १ २ ३ १ २ ३ २ ३ १ २
दारुजे वसु ॥ अभीषुणः सखीनामविता जरितॄणाम् । शतं भवा
३ १ २
स्यूतये ॥ १२ ॥

१ २ ३ १ २ ३ २ ३ १ २ ३ १र २र ३ २ ३ १र
तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः । अभिवत्सन्न स्व-

२र ३ २३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
सरेषु धेनव इन्द्रं गीर्भिर्नवामहे ॥ द्युक्ष ँ सुदा नुन्तवीषीभिरावृतं
२ १र २र ३ १ २ ३ २ ३ १ २ ३ १ र ३ १ २ ३ १र
गिरिन्न पुरुभोजसम् । क्षुमन्तं वाज ँ शतिन ँ सहस्रिणं मक्षू गो-
२र
मन्तमीमहे ॥ १३ ॥

१ २ ३ १२ ३ १ २ ३ १ २ ३ १२ ३ १र २र ३ १
तरोभिर्वो विदद्वसुमिन्द्र ँ सबाध ऊतये । बृहद्गायन्तः सुत
२ ३ २ ३ २उ ३ २ ३ १ २ २उ ३ १र २र ३ २ ३ २उ ३
सोमे अध्वरे हुवे भरं न कारिणम् ॥ नयं दुध्रा वरं तेन स्थिरासुरो
१ २ ३ १र २र २ ३ १ २ ३ १ २ ३ १र २र ३ २
मदेषु शिप्रमन्धसः । य आदृत्याशशमानाय सुन्वते दाता जरित्र
३क २र
उक्थ्यम् ॥ १४ ॥

१ २ ३ १ २ ३ १२ ३ १ २ १ २ ३ १ २
स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे
३ २ ३ १ २ ३ १ २ ३ २उ ३ १ २ १ २ ३ २ ३ १
सुतः ॥ रक्षोहा विश्वचर्षणिरभि योनिमयोहते । द्रोणे सधस्थमा-
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ २ ३ १ २
सदत् ॥ वरिवो धातमो भुवो म ँहिष्ठो वृत्रहन्तमः । पर्षिराधो
३ १ २
मघोनाम् ॥ १५ ॥

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ १ २ ३ १
पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो मदः । महिद्युक्ष-
२ ३ १ २ १ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ २ ३ १ २
तमो मदः ॥ यस्य ते पीत्वा वृषभो वृषायतेऽस्य पीत्वा स्वर्विदः ।
२ ३ १ २ ३क २र ३ २उ ३ २ ३ १ २
सम्प्रकेतोअभ्यक्रमी दिशोच्छावाजंनै तषः ॥ १६ ॥

२ ३ १ २ ३ २ ३ १र २र ३ १२ ३ २ ३ २ ३ १ २
इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः । श्रुष्टे जातास इन्दवः
३ १ २ ३ १र २र ३ १र २र ३ २ २ ३ १ २
स्वर्विदः ॥ अयं भराय सानसिरिन्द्राय पवते सुतः । सोमो जैत्रस्य

३ १२ ३ २ ३ २उ ३ २ ३ २ ३१ २ ३ २
चेतति यथाविदे॥ अस्येदिन्द्रो मदेष्वा ग्राभङ्गृभ्णाति सानसिम्।
१२ ३ १२ ३ १ २ ३ २
वज्रं च वृषणं भरत्समप्सुजित् ॥ १७॥
३ १ २ ३ १ २ ३ १२ ३ १ २ २ ३ १ २
पुरोजिती वो अन्धसः सुताय मादयित्नवे। अपश्वानꣳश्न-
३ १ २ १क २ १ २र ३ १ २ ३ १ २
थिष्टन सखायो दीर्घजिह्वयम् ॥ यो धारया पावकया परिप्रस्यन्दते
३ २ २ ३ २ ३ १र २र २ ३ १ २ ३ २उ ३ १ २ ३ १ २
सुतः। इन्दुरश्वो न कृत्व्यः॥ तन्दुरोषमभीनरः सोमं विश्वाच्या
३ २ ३ १ २ ३ १ २
धिया। यज्ञाय सन्त्वद्रयः॥ १८॥
२ २ ३ १ २ ३ १ २ ३ १ २ ३ २उ ३ २ ३
अभि प्रियाणि पवते च नो हितो नामानि यह्वो अधि येषु
१ २ १र २र ३ २ ३ २उ १ २ ३ १ २ ३ २
वर्द्धते। आ सूर्यस्य बृहतो बृहन्नधिरथं विष्वञ्च मरुहद्विचक्षणः॥
३ १ २ ३ १ २ ३ १ २ ३ २ ३ १र २र ३ २ ३ १र २र
ऋतस्य जिह्वा पवते मधुप्रियं वक्ता पतिर्द्धियो अस्या अदाभ्यः।
१ २ ३ २ ३ १ २ ३ २ऽ ० १ २ ३ २ ३ १ २ ३ २ ३ २ १ २
दधाति पुत्रः पित्रोरपीच्य ३ नाम तृतीयमधिरोचनं दिवः॥ अव
३ २ ३ १ २ ३ १ २ ३ २उ ३ १ २ ३
द्युतानः कलशाꣳ अचिक्रदं नृभिर्ये माणः कोश आ हिर-
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १
ण्यये। अभी ऋतस्य दोहना अनूषता धित्रिपृष्ठ उषसो वि-
२
राजसि॥ १९॥
३ १ २ ३ १ २ ३ १ २ ३ १ २ १ २ ३ २ ३ १ २
यज्ञायज्ञा वो अग्नये गिरा गिरा चद क्षसे। प्र प्रवयममृतं
३ १ २ ३ २ ३ १र २र ३ १र २र ३ २ ३ १र
जातवेदसं प्रियं मित्रंनशꣳ सिषम् ॥ ऊर्जानं पातꣳ सहिनाय-

२र ३ १र २र ३ १ २ २३ १ २ ३ १र २र ३ २ ३ २ ३ २
मस्मयुर्दाशेम हव्यदातये । भुवद्वाजेष्वविता भुवद्वृध उत त्राता
३ १ २
तनूनाम् ॥ २० ॥

२ ३१र २र ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
एह्यूषु ब्रवाणि तेऽग्न इत्थेतरा गिरः। एभिर्वर्द्धास इन्दुभिः ॥
२ ३क २र ३ २ ३ १ २ ३ १ २ २ ३ १ २
यत्र क्व च ते मनो दक्षं दधस उत्तरम् । तत्र योनिं कृणवसे ॥
१र २र ३ १ २ ३ १र २र २ ३ १ २
नहि ते पूर्त्तमक्षिपद्भुवन्नेमानां पते । अथा दुवो वनवसे ॥ २१ ॥
३ २ ३ १ २ ३ २उ ३ १ २ ३ १ २ १ २ ३ १
वयमु त्वामपूर्व्य स्थूरन्न कच्चिद्भरन्तोऽवस्यवः । वज्रिञ्चित्र
२ १ २ ३ १ २ ३ २ ३ २ ३ २ ३ १ २ ३ २ ३ २
ꣳ हवामहे ॥ उप त्वा कर्मन्नूतये स नो युवोग्रश्चक्राम यो धृषत् ।
२र २र ३ १ २ ३ १ २ ३ २
त्वामिद्ध्यवितारं ववृमहे सखाय इन्द्र सानसिम् ॥ २२ ॥
२ ३क २र ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
अधा हीन्द्र गिर्वण उप त्वा काम ईमहे ससृग्महे । उदेव ग्मन्त
३ १ २ १र २र ३ २ ३ १ २ ३ १ २ ३ १ २
उदभिः ॥ वार्णत्वा यव्याभिर्वर्द्धन्ति शूर ब्रह्माणि । वावृध्वाꣳसं चि-
३ १ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १र २र ३ १ २
दद्रिवो दिवे दिवे ॥ युञ्जन्ति हरी इषिरस्य गाथयो रौरथ उरुयुगे
३ १ २ ३ १ २ ३ १ २
वचो युजा । इन्द्रवाहा स्वर्विदा ॥ २३ ॥ देवास्तृप्यन्तु ॥

ततो भूरादिसप्तव्याहृतिभिः सन्तर्प्यान्ते ऋषयस्तृप्यन्तु ।

ॐ भूस्तृप्यतु । ॐ भुवस्तृप्यतु । ॐ स्वस्तृप्यतु । ॐ मह-स्तृप्यतु । ॐ जनस्तृप्यतु । ॐ तपस्तृप्यतु । ॐ सत्यं तृप्यतु । ॐ ऋषयस्तृप्यन्तु ।

ततो अग्न आयाहि इत्यादि तत्तच्छन्दस्काभिर्ऋग्भिश्छ-

२ ३
न्दांसि तर्पयेयुः। अग्न आयाहिऋगन्ते, गायत्री तृप्यतु। ॐ अग्न
१ २ ३१२ ३ २ ३ १ २ १२ २२ ३ १ २
आयाहि वीतये गृणानो हव्यदातये। नि होता सत्सिबर्हिपि॥
गायत्री तृप्यतु।

एवं पुरुत्वान्ते उष्णिक्। एवं प्रथमधा तर्पणम्। न तु गायत्रीं, उष्णिहं इत्येवम्।

३ १ २ ३ १ २ ३१२३१२ ३ २ ३ १ २ ३ २उ
पुरु त्वा दाशिवाङ्वोऽचेरिरग्ने तव स्विदा। तोदस्येव शरण
३ २
आमहस्य॥ उष्णिक् तृप्यतु।

२३ १ २ ३ १ २ ३ ३ १ २ १ २ ३ १२ २२ ३
अग्न ओजिष्ठमाभर द्युम्नमस्मभ्यमध्रिगो। मनो रायेपनीयसे
३ १ २३ १ २
रत्सि वाजाय पन्थाम्॥ अनुष्टुप् तृप्यतु।

३ १२ ३ १२ ३ २ ३ १ २ २ २३१३१२
यज्ञायज्ञा वो अग्नये गिरा गिरा च दक्षसे। प्र प्रवयममृतं
३ १२ ३ २ ३ १२ २२
जातवेदसं प्रियं मित्रं नश ᳲ सिषम्॥ बृहती तृप्यतु।

३ २ ३ २ २ ३२ ३ १ २ ३क २ १ २
स्वादोरित्था विषूवतो मधोः पिवन्ति गौर्यः। या इन्द्रेण
३ १ २३२ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
सयावरीर्वृष्णा मदन्ति शोभथा वस्वीरनु स्वराज्यम्॥ पङ्क्तिस्तृप्यतु।

१ २ ३ १ २ ३ १२ २२ ३ १ २
आ जुहोता हविषामर्जयध्वं निहोतारं गृहपतिं दधिध्वम्।
३२ ३ १२ २२ ३ १ २ २ १ २ ३ २ ३क २
इडस्पदे नमसारात हव्यᳲ सपर्यता यजतं पस्त्यानाम्॥ त्रिष्टुप् तृप्यतु।

३ २उ ३ १ २ ३ २ ३ १ २ ३ १२३ १ २ ३ १ २
चित्र इच्छिशोस्तरुणस्य वक्षथो नयो मातरावन्वेति धातवे।

३ १र २र ३ १ २ ३ २ ३१ ३ १ २ ३ २ १ २
अनुधायदजीजनदधा चिदाववक्षत्सद्योमहि दूत्य ३ ञ्चरन् ॥ जगती तृप्यतु । छन्दाꣳसि तृप्यन्तु ।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
प्रवो महे मतयो यन्तु विष्णवे मरुत्वते गिरिजा एवया मरुत् ।
१र २र २ २र २र ३ १ २ ३१ २ ३ १ २ ३ १ २ ३ १ २
प्रशर्द्धाय प्रयज्यवे सुखादये तवसे भन्ददिष्ठये धुनि व्रताय शवसे ॥
अतिजगती तृप्यतु ।

१ २ ३ १र २र ३ १ २ ३ १ २ ३ २
प्रोष्वस्मै पुरो रथ मिन्द्राय शूषमर्चत । अभीकेचिदुलोकक्रु-
३ २ ३१ २ ३ २ ३ १ २ ३ १र २र ३ १ २
त्सङ्गे समत्सु वृत्रहा । अस्माकं बोधि चोदितानभन्तामन्यकेषां
३ १ २
ज्याका अधिधन्वसु ॥ शक्करी तृप्यतु ।

२३ १र २र ३ १ २ ३ १र २र ३ २ ३ १ २ ३ २
तवत्यं नर्यं नृतोप इन्द्रप्रथमं पूर्व्यं दिवि प्रवाच्यं कृतम् ।
२ ३२ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ २ २ ३ १ २ ३ १२ ३
यो देवस्य शवसा प्रारिणा असुरिणन्नपः । भुवो विश्वमभ्यदेव-
१ २ ३ ३ १ २ ३ १र २र
मोजसा विदे दूर्जꣳ शतक्रतुर्विदेदिषम् ॥ अतिशक्करी तृप्यतु ।

१ २ ३ १र २र ३ २ ३ १र २र ३ १
त्रिकद्रुकेषु महिषो यवाशिरन्तु विशुष्मस्तृम्पत्सोम मपिबद्वि-
२ ३ १ २ ३र १र ३२ ३ २ ३ १ २ ३ २ ३ १र
ष्णुना सुतं यथा वशम् । सईं ममादमहि कर्म कर्त्तवे महामुरु
२र ३ २ ३ २ ३ १र २र ३ १र २र
ꣳ सैन ꣳ सश्चद्देवोदेव ꣳ सत्य इन्दुः सत्यमिन्द्रम् ॥ अष्टिस्तृप्यतु ।

२ ३ १ २ ३ २ ३ २ ३ १ २ ३ १र २र ३ १
अस्तु श्रौषट् पुरो अग्निं धिया दध आनुत्यच्छर्द्धो दिव्यं
२ ३ १ २ २ ३ १ १ २ ३ १ २ ३ २ ३
वृणीमह इन्द्रवायू वृणीमहे । यद्धक्राणा विवस्वते नाभा सन्दाय

१ २ २ ३ २ ३ १र २र ३ १ २ ३ २उ ३ २ ३ १ २
नऽपसे । अधमन्नूनमुपयन्ति धीतयो देवा ८ अच्छान धीतयः ॥ अत्यष्टिस्तृप्यतु ।

२ १ २ १र २ २.१र २
घर्मः प्रवृक्तस्तन्वासमानृधद्वृधे ॥ धृतिस्तृप्यतु ।

२ २ १ २ १ २ २ २ १
सर्पत प्रसर्पत सुवर्गमेतेवयम् ॥ अतिधृतिस्तृप्यतु । अतिच्छन्दाᳬंसि तृप्यन्तु ।

१ २ १ २ २ १ २ १ २ १र २
सं यमन्न व्यायमन्वियमन्नसमायमन्न ॥ कृतिस्तृप्यतु ।

२ २ १र २ २ २ १ २ १ २ १ २ १
चराचराय बृहत इदं वाममिदं बृहत् ॥ प्रकृतिस्तृप्यतु ।

१र २र ३ २ १ २
द्यौरन्तान्भूमिरततनत्समुद्र ऽ समचुकुपत् ॥ आकृतिस्तृप्यतु ।

१र २ १ २ १ २ १र २ १ २
ज्योतिष्पत स्वः पतान्तरिक्षं पृथिवीं पञ्च प्रदिशः ॥ विकृतिस्तृप्यतु ।

१ र २ १ २ १ र २ १ २
मनोजयिद्धृदयमजयिदिन्द्रो जयिदहमजैषम् ॥ सङ्कृतिस्तृप्यतु ।

१र २ र १ र र २ १ र र २ १ र
प्रागन्यदनु वर्त्ततेरजोपागन्यतमो पेषति भूयसा ॥ अभिकृतिस्तृप्यतु ।

१ २ २ १ २ १ १ २ १ १ २ १
अधिप । ताइ । मित्रप । ताइ । क्षत्रप । ताइ । स्वः पताइ ।
१ २ — — १
धनपता २ यि । ना २ माः ॥ उत्कृतिस्तृप्यतु । विच्छन्दाᳬंसि तृप्यन्तु ।

ततो वंशीयानामृषीणां प्रतिनामाभिः प्रथमया तर्पणम् । तद्यथा—
ॐ नमो ब्रह्मणे नमो ब्राह्मणेभ्यो नम आचार्येभ्यो नम ऋषिभ्यो

नमो देवेभ्यो नमो वेदेभ्यो नमो वायवे च मृत्यवे च विष्णवे च नमो वैश्रवणाय चोपजाय च । इत्यन्तं कृताञ्जलि पठित्वा, नमस्कृत्य तर्पयेत् । ॐ शर्वदत्तस्तृ० । रुद्रभूतिस्तृ० । त्रातस्तृ० निगडस्तृ० । गिरिशर्मास्तृ० । ब्रह्मवृद्धिस्तृ० । मित्रवर्चास्तृ० । सुप्रतीकस्तृ० । बृहस्पतिगुप्तस्तृ० । भवत्रातस्तृ० । कुस्तुकस्तृ० । श्रवणदत्तस्तृ० । सुशारदस्तृ० । ऊर्जयन्तस्तृ० । भानुमाꣳस्तृ० । आनन्दजस्तृ० । शाम्बस्तृ० । काम्बोजस्तृ० । मद्रगारस्तृ० । स्वातिस्तृ० । सुश्रवास्तृ० । प्रातरन्हस्तृ० । केतुस्तृ० । मित्रविन्दस्तृ० । सुनीथस्तृ० । सुतेमनास्तृ० । अंशुस्तृ० । अमावास्यास्तृ० । राधस्तृ० । गातास्तृ० । संवर्गजितस्तृ० । शाकदासस्तृ० । विचक्षणस्तृ० । गर्दभीमुखास्तृ० । उदरशाण्डिल्यस्तृ० । अतिधन्वास्तृ० । मशकस्तृ० । स्थिरकस्तृ० । वसिष्ठस्तृ० । वासिष्ठस्तृ० । सुमन्त्रस्तृ० । शूषस्तृ० । राळस्तृ० । दृतिस्तृ० । इन्द्रोतास्तृ० । वृषशुष्णस्तृ० । निकोथकस्तृ० । प्रतिथिस्तृ० । देवतरसस्तृ० । श्रवसस्तृ० । अग्निभूस्तृ । इन्द्रभूस्तृ० । मित्रभूस्तृ० । विभण्डकस्तृ० । ऋष्यशृङ्गस्तृ० । कश्यपस्तृ० । अग्निस्तृ० । इन्द्रस्तृ० । वायुस्तृ० । मृत्युस्तृ० । प्रजापतिस्तृ० । ब्रह्मा तृ० ।

ततोऽग्न्यादीनां तर्पणम् । अग्निस्तृ० । प्रजापतिस्तृ० । विश्वेदेवास्तृप्यं० । ॐ कारस्तृ० । वषट्कारस्तृ० । महाव्याहृतयस्तृप्यं० । गायत्री तृ० । ब्रह्मा तृ० । विष्णुस्तृ० । वेदास्तृप्यं० । देवास्तृप्यं० । ऋषयस्तृप्यं० । मुनयस्तृप्यं० । आचार्यास्तृप्यं० । पुराणानि तृप्यं० । छन्दाꣳसि तृप्यं० । यज्ञास्तृप्यं० । अध्ययनं तृप्य० । द्यावापृथिव्यौ तृप्येताम् । अन्तरिक्षं तृ० । अहोरात्राणि तृप्यं० । मासास्तृप्यं० ।

ऋतवस्तृप्यं०। संवत्सरस्तृ०। वरुणस्तृ०। समुद्रास्तृप्यं०। नद्यस्तृप्यं०। गिरयस्तृप्यं०। क्षेत्राणि तृप्यं०। वनानि तृप्यं०। ओषधयस्तृप्यं०। वनस्पतयस्तृप्यं०। पन्नगास्तृप्यं०। नागास्तृप्यं०। उरगास्तृप्यं०। सुपर्णास्तृप्यं०। वयाꣳसि तृप्यं०। गावस्तृप्यं०। वसवस्तृप्यं०। रुद्रास्तृप्यं०। आदित्यास्तृप्यं०। मरुतस्तृप्यं०। सिद्धास्तृप्यं०। साध्यास्तृप्यं०। गन्धर्वास्तृप्यं०। पिशाचास्तृप्यं०। यक्षास्तृप्यं०। रक्षाꣳसि तृप्यं०। भूतानि तृप्यं०। नक्षत्राणि तृप्यं०। अश्विनौ तृप्येताम्। अप्सरसस्तृप्यं०। चतुर्विधभूतग्रामस्तृ०। मरीचिस्तृ०। अत्रिस्तृ०। अङ्गिरास्तृ०। पुलस्त्यस्तृ०। पुलहस्तृ०। क्रतुस्तृ०। प्रचेतास्तृ०। वसिष्ठस्तृ०। भृगुस्तृ०। नारदस्तृ०। सप्तर्षयस्तृप्यं०। अरुन्धती तृ०। गोभिलाचार्यस्तृ०। एवमादयः एते मे स्वस्ति कुर्वन्तु तर्पिताः स्वस्ति कुर्वन्तु तर्पिताः।

अथापसव्येन तिलैर्द्विगुणदर्भैः पितृतीर्थेन। ओँकारो महाव्याहृतयो गायत्री ब्रह्मा वेदा देवा ऋषयः पितरश्छन्दांस्याचार्यास्तृप्यन्ताम्। एवं त्रिः। राणायनिस्तृ०। शाट्यमुग्रस्तृ। व्यासस्तृ०। भागुरिस्तृ०। औगुण्डिस्तृ०। गौल्गुलविस्तृ०। भानुमानौपमन्यवस्तृ०। काराटिस्तृ०। मशको गार्ग्यस्तृ०। वार्षगण्यस्तृ०। कौथुमिस्तृ०। शालिहोत्रस्तृ०। जैमिनिस्तृ०। त्रयोदशैते मे सामगाचार्याः स्वस्ति कुर्वन्तु तर्पिताः स्वस्ति कुर्वन्तु तर्पिताः।

शाटिस्तृ०। भाल्लविस्तृ०। काल्लबविस्तृ०। ताण्ड्यस्तृ०। वृषाणकस्तृ०। रुरुकिस्तृ०। शमबाहुस्तृ०। अगस्त्यस्तृ०। वष्कशिरास्तृ०। हूहूस्तृ०। दशैते मे प्रवचनकर्त्तारः स्वस्ति कुर्वन्तु

तर्पिताः स्वस्ति कुर्वन्तु तर्पिताः।

कव्यवालस्तृ०। नलस्तृ०। सोमस्तृ०। यमस्तृ०। अर्यमा-स्तृ०। अग्निष्वात्तास्तृप्यं०। सोमपास्तृप्यं०। बर्हिषदस्तृप्यं०। यमस्तृ०। धर्मराजस्तृ०। मृत्युस्तृ०। अन्तकस्तृ०। वैवस्वतस्तृ०। कालस्तृ०। सर्वभूतक्षयस्तृ०। औदुम्बरस्तृ०। दध्नस्तृ०। नील-स्तृ०। परमेष्ठी तृ०। वृकोदरस्तृ०। चित्रस्तृ०। चित्रगुप्तस्तृ०।

तत उत्तरवंशीयानाम्। ॐ आचार्येभ्यो नमस्कृत्वाथ वंश-स्य कीर्तयेत्। स्वधा पूर्वेषां भवति नेतायुर्दीर्घमश्नुत इत्युक्त्वा-नुक्रामेद्वंशमाब्रह्मणो। अर्यमभूतिस्तृ०। भद्रशर्मा तृ०। पुष्य-यशसस्तृ०। सङ्करस्तृ०। अर्यमराजगोभिलस्तृ०। पूषमित्रगोभि-लस्तृ०। अश्वमित्रगोभिलस्तृ०। वरुणमित्रगोभिलस्तृ०। मूल-मित्रगोभिलस्तृ०। वत्समित्रगोभिलस्तृ०। गौल्गुलवीपुत्रगोभिल-स्तृ०। बृहद्वसुगोभिलस्तृ०। राधस्तृ०।

ततो राधाद्द्वितीयखण्डोक्तांस्तर्पयेत्। राधस्तृ०। गाता तृ०। संवर्गजितस्तृ०। शाकदासस्तृ०। विचक्षणस्तृ०। गर्दभीमुखास्तृ०। उदरशाण्डिल्य०। अतिधन्वा०। मशक०। स्थिरक०। वसिष्ठ०। वासिष्ठ०। सुमन्त्र०। शूष०। राल०। हृति०। इन्द्रोता०। वृषशुष्ण०। निकोथक०। प्रातिथिस्तृ०। देवतरस०। शवस०। अग्निभुव०। इन्द्रभुव०। मित्रभुवस्तृ०। विभण्डक०। ऋष्यशृङ्ग०। कश्यप०। अग्नि०। इन्द्र०। वायु०। मृत्यु०। प्रजापति०। ब्रह्मा तृप्यतु।

ततः समाचारान्निवीती सनकादीन्सन्तर्प्याचम्य, ॐ सनक-स्तृ०।२। सनन्दनस्तृ०।२। सनातन०।२। कपिल०।२। आसु-

रि० ।२। वोढुस्तृ० ।१। पञ्चाशिखस्तृ० ।१। ऋषीन्सम्पूज्य, ऋषिश्राद्धं कुर्यात्—आचमनं प्राणायामः। ऋषिश्राद्धे क्षणः क्रियताम्, ॐ तथा प्राप्नवन्तु भवन्तः। प्राप्ताः स्मः। आगतं वः। सुस्वागतन्नः। गौतमादिसप्तर्षिभ्य एतद्वः पाद्यम्। एतद्वो अर्घ्यम्। चन्दनपुष्पैः पूजनं, स्वपादप्रक्षालनं, आचमनम्। भूर्भुवःस्वः समाध्वम्, सुसमास्महे।

२उ ३क
आचमनं प्राणायामः। गायत्रीं गायत्रञ्च साम पठेत्। ॐ भूर्भुवः
२र १ २ ३ १ २ १ र २ र र
स्वः। तत्सवितु० यात्। ॐ तत्सवितुर्वरेणियोम्। भार्गोदेवस्य धीमा-
— २ १र र २ १ १ — १ ३ १ १ १ १
ही २। धियो योनः प्रचो? २१२। हुं। आ २। दायो। आ २३४५॥

सप्तव्याधा दशार्णेषु मृगाः कालञ्जिरे गिरौ। चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे॥ तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः। प्रस्थिता दीर्घमध्वानं यूयन्तेभ्योऽवसीदथ। देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च। नमः स्वाहायै स्वाहायै नित्यमेव नमो नमः॥ अयमेव मन्त्राञ्जलिः पठनीयः। गयायै नमः। गदाधराय नमः। गयायां देवरूपेण स्वयमेव जनार्दनः। तन्ध्यात्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात्॥ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा। यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः॥ पात्रे जलमापूर्य, गन्धादीन्निक्षिप्य, कुशाग्रैरेतज्जलं संस्पृश्य, दशधा गायत्रीं सञ्जप्य। एतोन्विन्द्रँ स्तवाम शुद्धँ शुद्धेन साम्ना। शुद्धैरुक्थैर्वावृध्वाँ सँ शुद्धैराशीर्वान्ममत्तु॥ इन्द्रः शुद्धो न आगहि शुद्धः शुद्धाभिरूतिभिः। शुद्धो रयिं निधारय शुद्धो ममद्धि सोम्य। इन्द्र शुद्धो हिनो रयिँ शुद्धो रत्नानि दाशुषे। शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजँ सिषाससि॥ ए-

भिर्मन्त्रैर्जलमभिमन्त्र्य, कुशाग्रगृहीतजलेन श्राद्धोपहारान् सम्प्रोक्ष्य । अन्नाद्यर्थं साङ्कल्पविधिना ऋषिश्राद्धं करिष्ये । गौतमादि सप्तर्षिभ्य इदमासनम् । उपग्रहविष्टरार्थे इमे कुशाः । गन्धपुष्पैः सम्पूज्य । यथादत्तं गन्धाद्यर्चनं सप्तर्षिभ्यः स्वाहा । ऋषिश्राद्धसाङ्गतासिद्ध्यर्थं ब्राह्मणभोजनपर्याप्तमामं तन्निष्क्रयद्रव्यं वा ब्राह्मणं वा भोजयिष्ये । ऋषिश्राद्धसिद्ध्यर्थं दक्षिणामाचार्याय सम्प्रदास्ये । ततो जलादिदानम् । ॐ शिवा आपः सन्तु । सौमनस्यपुष्पमस्तु । अक्षतञ्चारिष्टञ्चास्तु । अघोरा ऋषयः सन्तु । ऋषिश्राद्धे यन्न्यूनातिरिक्तं तत् परिपूर्णमस्तु । उत्तरे कर्मण्यनिर्विघ्नमस्तु, अस्तु ।

२ २
ततो ऋषिमाल्यमादाय प्लवसाम्ना प्लावयित्वा । हा । वो३हा ।
२ ^ ३ ५ २ २ ^ ३ ५ २ ^ ३
वो३ हा३ । हाओ २३४ वा । हाइ । पुनाना २३४ः सो । माधारा२३४
५ २ ^ ३ ५ २ ३ ५ २ ^ ३ ५ २
या । आपोवा २३४ सा । नोअर्षा २३४सी । आरत्ना२३४धाः । यो-
^ ३ ५ २ ^ ३ ५ २ ^ ३ ५ २
निमा२३४र्त्ता । स्यासीदा २३४ सी । उत्सोदा २३४ इवो । हा-
^ ३ ५ २ २ २ २ २ २ ^ ३
इरण्या २३४ याः । । । वो ३ हा । वो ३ हा ३ । हाओ २३४
५ २ ५र र २ १ २ १ २र १र २ र ३ १ १ १ १
वा । हा ३४ । औहोवा । ए३ । अति विश्वा निदुरिता तरेमा२३४५
॥१॥ प्लवोऽन्वहम्भवति समुद्रं वा एते प्रस्नान्ति ये संवत्सरमुपयन्ति यो वा अप्लवः समुद्रं प्रस्नाति न सतत उदेति यत्प्लवो भवति स्वर्गस्य लोकस्य समष्ट्या अति विश्वानि दुरिता तरेमेति यदेवैषां दुष्कृतं दुःशस्तं तदेतेन तरन्ति । ततो निमज्याचम्य । अरिष्टवर्गसामानि पठेत् । तानि यथा–अबोध्यग्निरिति प्रजापति ऋषिः त्रिष्टुप् छन्दः इन्द्रो देवता,

महित्रीणामिति द्वयोः पङ्क्त्याङ् गायत्री प्रजापतिः, त्वावत इति साकमश्वो गायत्रीन्द्रः, इन्द्रंनर इति गौरीवित त्रिष्टुबिन्द्रः । त्वमु- ष्विति द्वयोस्तार्क्ष्य ऋषिः त्रिष्टुप् छन्दः इन्द्रो देवता, त्रातारमीति इन्द्र ऋषिः त्रिष्टुप् छन्दः इन्द्रो देवता, सोमः पुनान इति प्रजापति ऋषिः उष्णिक् छन्दः सोमो देवता, समुन्वेय इति भरद्वाज ऋषिः गा- यत्री छन्दः सोमो देवता, विश्वतो दावान्निति इन्द्र ऋषिः पङ्क्त्याट्- पङ्क्तिछन्दः वरुणादित्यौ इन्द्रो देवता, उदुत्तममिति वरुणगौतमा- वृषी त्रिष्टुप् छन्दः वरुणादित्यौ देवते, शान्त्यर्थे जपे विनियो-

४ ५२ ४ १ २ १२१ १ ९२ २ १ २
गः । ॐ अबोधिया । आइःसमिधाजना २ नाम् । प्रताइधे
२ २२ १२ १ २ १ १ २ १ ९२ १२ २ १ २ २
इनूम् । इवायतीमुषासम् । यह्वाई ३ वा । प्रवाऽयामुज्जिहानाः ।
१ २ २ २ २ ११२ १ २ १ २ १
प्रभाना २३ वाः । सस्रतेनाकमच्छ । इडा २३ भा ३४३ । ओ
१ ३ २ ^ ३ ५ १ —
२३४५ इ । डा ॥ १ ॥ महायित्रा २३४ यिणाम् । अवा २
१ ३१ ३ ५ — १ ३ २ ^ ३
रस्तु । द्युक्षं मा २३४ यित्रा । स्या २ र्यम्णाः । दुराधा २३४
१ २ १२ ५ ४ ५ ५ २
र्षाम् । वरौहो२३४ । वा । णा ५ स्यो ६ हायि ॥ २ ॥ महित्री-
१ ५ २ १ २ २ १२ २ १
णामवरस्तु ६ ए । द्युक्षंमित्रस्यार्यम्णाः । दुराधा २३ र्षाम् । वरौ-
— १ — १ १ ^ २ ५२ २ २१ १ २
हो २ । हुंमा २ । णा । स्यो २ । या २३४ । औहोवा । हाओवा ।
१ ३ १ १ १ १ १ २ २ १ २ १ २ २
ओवा २३४५ ॥ ३ ॥ त्वावतो ३ । हौ ३ हो ३१ यि । पुरूव-
१ २ २ १ १ १ २
सो ३ । हौ ३ हो ३१ यि । वयमिन्द्रा ३ । हौ ३ हो ३१ यि ।

१ र ९ २ १ २र ९ २
प्रणेता ३ः। हौ ३ हो ३१ यि। स्मसिस्थाता ३ः। हौ ३ हो
१ ९ २ ९ २
३१ यि। हरीणा ३ मू। हौ ३ हो ३१ २३४५. इ। डा॥ ४॥
९ ^ ३ ५ २ ^ ३ ५ २ १ १
इन्द्रं ना २३४ रो। नेमाधा २३४ यिता। हवन्ता २३ यि। य-
^ ३ ५ २ ^ ३ ५ २ १ २
त्पारा २३४ याः। यूनाजा २३४ तायि। धियास्ता २३ः। शु-
^ ३ ५ २ ^ ३ ५ २ १ २
रोना २३४ र्षा। ताश्रावा २३४ साः। चकामा २३ यि। आ-
^ ३ ५ २ ^ ३ ५ १ ९ २ २
गोमा २३४ ती। व्रजायिभा २३४ जा। त्वन्ना ३ उवा ३। ए ३।
१ र ३ १ १ १ १ ५ र १र ३ १ १ १ १ २र र ३
आयू २३४५ः॥५॥ त्यमूषु। वाजि। ना २३४५ मू। देवजूता२३४
५ र३ र २ १ २ २ ३ ४ ५ २ ^ ३ ५
मू। सहोवानन्ता। रुता३। र९ रथानामू। अरिष्टना२३४ यिमीमू।
९ २ ३र ५ २ १ १र २ ^ ३ २ २
पृतना ३४३ जमाशुमू। स्वस्त। यायि। तार्क्ष्यमिहा ३४३। हू
४ २र २ २ र र
३ वा ५ यिमा ६५६ ॥ ६॥ ईयइया ३ हायि। त्यमूषुवाजिना
४ २ ३र ५ ३ ५ ४५र ३ ५ र ३र २ १
३ न्दे ३ वजूतमू। इ ४ य इया। हा २३४ यि। सहोवानन्ता।
२ २ ३ ४ ५ २र २ २ १
रुता ३। र९ रथानामू। ईयइया ३ हायि। अरिष्टा ३। नायि।
२ १ २ ३ ४र ५ ३ ५ ४ ५र ३ १ १ १ १ २
मीं ३ म्पृत। नाजमाशुमू। ई ४ य इया। हा २३४५ यि। स्व-
१ र २ ^ ३ २ २ ४
स्त। यायि। तार्क्ष्यमिहा ३४३। हू ३ वा ५ यिमा ६५६ ॥७॥
२र १र ७ २ १र र
त्रातारमिन्द्रमविता। रमी २३ न्द्रामू। हवेहवे सुहवशूरमु। रमी २३

२ १ ७ २ २१ २ १ र
न्द्राम् । हूवायि नुशक्रम्पुरुहू । तमी २३ न्द्राम् । इद२ँ स्वस्ति नो
२१र २ २ ४ ३र४
मघवा । वा ३४२ यि । तु ३ वा ५ इन्द्रा ६५६ः ॥ ८ ॥ सोमः
१र २^ ३४र ५ ५ १ र २ २ २ २^
पुना । ह्वो । नऊर्मिणा ६ ए । अव्यंवारंविधा १ वा ३ ती । अग्रे-
३ ३ १११२ २१ २ १ ^ ३
वा २३४५ । चा २३४५ः । पव मा २३ ना ३ः । क्रा २ ना
५र र २^२ १११२ ४ ५ १र२
२३४ औहोवा । ऋदद्दे २३४५ ॥ ९ ॥ सासु । न्वेयोवसू २३
२ १ —१ — २र२ १ ५ १ २
नाम् । योरा२यामा २ । नेतायइडा २३ नाम् । सो २३ माः ।
१ २ १ ५ ६ २ऽऽ २ २र
यःसुक्षिता २३४ यिनो ६ हायि ॥ १० ॥ हाउ ३ वा । विश्वतो-
र १ २र १र २ २ऽऽ १ र २ १र २र २ऽऽ
दावन्विश्वतोनआभर । हाउ ३ वा । यन्त्वाशविष्ठमीमहे । हाउ ३
१र २ऽऽ १र २ऽऽ २र २ऽऽ
वा । आयुः । हाउ ३ वा । सूवः । हाउ ३ वा । ज्योतिः । हाउ ३
३ ११११ २र २र र २र
वा ३ । ई २३४५ ॥ ११ ॥ हाउ । ३ । आयुश्चक्षुर्ज्योतिः । औ-
१ २ १ २ १ २ २ १ २ २र
होवा । इया । उदुत्तमंवरुणपाशमा २३ स्मात् । अवाधमंविमध्य-
२ १ २ २ र र २ २ २र२ र
मंश्रथा २३ या । अथादित्यव्रते वयन्ता २३ वा । अनागसोअ-
र २ १ २ २र १र र २र१ २
दितयेसिया २३ मा ३ । हाउ ३ । आयुश्चक्षुर्ज्योतिः । औहोवा ।
२ ^ ३ ५र र ३ ११२१
ई २ । या २३४ । औहोवा । ई २३४५ ॥ १२ ॥

तत्र येषां ब्रह्मचारिणां पूर्ववृत्तान्तश्रुतस्य वेदस्य प्रथमारम्भस्ते-षामत्र वृद्धिश्राद्धम् आनीतानृषीन शुभपीठाद्यासने कुशोपरि संस्थाप्य पञ्चोपचारैः सम्पूजयेत्तद्यथा–ॐ ऋषिर्विंप्र० नाम् । गौत-

मादि० नमः चन्दनं० । ऋषिर्विप्र० नाम् । गौतमादि० नमः पुष्पाणि स० । ॐ ऋषिर्विप्र० नाम् । गौतमादि० नमः धूपं स० । ॐ ऋषिर्विप्र० नाम् । गौतमादी० नमः दीपं स० । ॐ ऋषिर्विप्र० नाम् । गौतमादि० नमः नैवेद्यं स० । अनेन पञ्चोपचारपूजनेन गौतमादिसप्तर्षयः प्रीयन्तान्न मम ।

कर्माङ्गमाचम्य प्राणानायम्य । चन्दनादिना तिलकङ्कुर्यात् ।

४र५ ४र५र ४ ५ ४ २ १ १ २ १ २ २
सोमᳲ राजानं वरुणाम् । अग्निमन्वार भामहे ३ । होवा ३ हायि ।
१र १ २ १२ र १ २ २ २ १र २
आदित्यं विष्णुᳲ सूर्यम् । होवा ३ हायि । ब्रह्माणा २३ श्चा ३ ।
१ २ २ १ ९ २ ३ ५ २२१र
होवा ३ हायि । बृहा ३ ऊवा ३ । पा २३४ तीम् ॥ १ ॥ त्राता
७ २ १र र ७ २
रमिन्द्रमविता । रमी २३ न्द्राम् । हवेहवे सुहवᳲशु । रमी२३ न्द्राम् ।
१ ७ २ २१ २ १ र २ १ र
हूवायि नुशक्रम्पुरुहू । तमी २३ न्द्राम् । इदᳲ स्वस्तिनो मघवा ।
२ २ ४
वा ३४३ यि । तू ३ वा ५ इन्द्रा ६५६ः ॥ २ ॥ देशकालौ सङ्कीर्त्य "छन्दोयातयामत्वनिवृत्तये नित्यविधिरूपमुपाकर्माङ्गहोममहङ्करिष्ये ।" ततः पञ्चभूसंस्कारान् कुर्यात्ते यथा—

त्रिभिः कुशैः कुण्डस्य स्थण्डिलस्य वा पश्चिमभागादारभ्य प्राञ्चं त्रिवारं संम्मृज्य । तथैव गोमयेन त्रिवारमुपलिम्पेत् । ततो वामहस्तमग्निनिधानपर्यन्तं कुण्डे स्थण्डिले वा निधाय । दक्षिणहस्तेन कुशमूलेन कुण्डस्य स्थण्डिलस्य वा सार्द्धाङ्गुलमितां भूमिं दक्षिणतस्त्यक्त्वा प्राग्गतां प्रादेशमितां लेखामुल्लिख्य । तन्मूललग्नामुदग्दिग्गतां द्वितीयामेकविंशत्यङ्गुलमितांल्लेखामुल्लिख्य, प्रथमरेखाया उत्तरस्यां सप्तसप्ताङ्गुलमन्तरं त्यक्त्वा प्रादेशमात्रास्तिस्रो रे-

खाः कुर्यात् । उल्लेखनक्रमेण प्राञ्चमुदञ्चमनामिकाङ्गुष्ठाभ्यां पांसूनीत्वा ऐशान्यां अरत्निमात्रप्रदेशे निक्षिपेत् । जलेन ता अभ्युक्ष्य । कांस्यादिपात्रेण मृन्मयेन वा 'भूर्भुवः स्वः' इत्यग्निं स्वाभिमुखं स्थापयेत् । इन्धनप्रक्षेपेणाग्निं सुसमिध्य । प्रादेशमितां समिधमग्नौ तूष्णीं हुत्वा । ततो न्यञ्चकरणम्-दक्षिणजान्वाच्य वामहस्तादूर्ध्वाहतो दक्षिणहस्तं आत्माभिमुखाङ्गुल्यग्रं कुण्डस्य स्थण्डिलस्य वा वायुकोणे संन्यस्य । वामहस्तं अग्न्यभिमुखाङ्गुल्यग्रं नैर्ऋतकोणे संन्यस्य । इदम्भूमेरिति परमेष्ठी प्रजापतिरनुष्टुबग्निर्देवता न्यञ्चकरणे विनियोगः ।

ॐ इदम्भूमेर्भजामह इदं भद्रꣳ सुमङ्गलम् । परा सपत्नान् बाधस्वान्येषां विन्दते धनम् ॥

अग्न्यभिमुखाङ्गुल्यग्रं गृहीतकुशादिहस्ताभ्यां परिसमूहनमुपविष्ट एव प्रादक्षिण्येन इमं स्तोममित्यादि ऋक्त्रयेण प्रत्यर्चं कुर्यात् । इमंस्तोमेत्यादि त्रयाणाङ्कुत्सो जगत्यग्निः परिसमूहने विनियोगः ।

ॐ इमꣳ स्तोममर्हते जातवेदसे रथमिव सम्महे मामनीषया । भद्रा हि नः प्रमतिरस्य सꣳसद्यग्ने सख्ये मारिषामा वयन्तव ॥१॥ भरामेध्मं कृणवामा हवीꣳषि ते चितयन्तः पर्वणा पर्वणा वयम् । जीवातवे प्रतरꣳ साधया धियोऽग्ने सख्ये मा रिषामा वयन्तव ॥२॥ शकेम त्वा समिधꣳ साधया धियस्त्वे देवा हविरदन्त्याहुतम् । त्वमादित्याꣳ आवहतꣳ ह्युश्मस्यग्ने सख्येमारिषामा वयन्तव ॥३॥

ततः प्रादक्षिण्येनाग्नेर्दक्षिणतो गत्वा कुण्डात्स्थण्डिलाद्वा बाहुमात्रां भूमिं दक्षिणतस्त्यक्त्वा, तत्र प्राङ्मुखः स्थित्वा, यज्ञियवृक्षजम्पीठं ब्रह्मासनत्वेन संस्थाप्य, तदुपरि त्रीन् कुशाना-

स्तीर्य, स्वासनमागच्छेत् । अथ ब्रह्मा प्रादक्षिण्येनाग्नेर्दक्षिणतो गत्वा स्वासने अग्निमारभ्य प्रादक्षिण्येनोदङ्मुखीं जलधारामविच्छिन्नां दत्वा, आस्तीर्णकुशानाम्पूर्ववतः प्रत्यङ्मुखस्तिष्ठन् वामहस्ताङ्गुष्ठानामिकाभ्यां आसनात् तृणं गृहीत्वा, प्रजापतिर्यजुः परावसुर्देवता, तृणनिरसने विनियोगः । "ॐ निरस्तः परावसुः" इति यजुषा नैऋत्यान्तत्तृणं निक्षिप्य । उदकं स्पृष्ट्वा, वशिष्ठो यजुः परावसुर्देवता आसनोपवेशने विनियोगः । "ॐ आवसोः सदने सीदामि" । अग्नेरुत्तरस्यां पूर्वपूर्वक्रमेणोत्तरदिग्गताग्रं पात्रासादनार्थं प्रागग्रान्दर्भानास्तीर्योपरि पात्राण्यासादयेत्तानि यथा—उदकपात्रं, त्रिशाखच्छिन्नमुष्टिर्बर्हिं, प्रादेशद्वय इध्मा २०, आज्यं, आज्यस्थाली, समिद्द्वयं, सम्मार्गकुशाः, स्रुवः, रक्षाः, धानाः, दधि, उपवीतं, उष्णोदकं, पूर्णपात्रम् । ततः पात्रे शुद्धोदकमापूर्य । गायत्र्याभिमन्त्र्य कुशाग्रगृहीतेन जलेनासादनक्रमेण पात्राणि कर्मसामग्रीश्च प्रोक्ष्य । अग्निसमाधानङ्कुर्वीत । कुशैः समन्तं परिस्तृणुयात्तद्यथा—बर्हिं चतुर्धा विभज्य एकं भागन्दक्षिणेनादाय सव्ये कृत्वा, तस्माच्च चतुर्थांशमादाय अग्निकोणादारभ्य उदक्संस्थमग्नेः पुरस्तात् स्तृत्वा । द्वितीयांशमादाय दक्षिणे आग्नेयीसलग्नं स्तृत्वा । पुनस्तृतीयांशमादाय उत्तरे प्रागग्रमैशानीसंलग्नं स्तृत्वा । चतुर्थांशं पश्चात् नैर्ऋतिकोणादारभ्योदक्संस्थं स्तृणीयात् । ततो द्वितीयभागमादाय सव्ये कृत्वा पूर्ववत् स्तरणम् । प्रथमास्तृतानां प्रागग्रैरग्रैर्मूलानि च्छादयन् । पुनरासादितात्तृतीयभागमादाय पूर्ववत् मूलान्याच्छादयन् स्तृत्वा । चतुर्थभागं यज्ञवास्त्वर्थमवशेषयेत् । ततोऽग्नेरुत्तरतः शुद्धोदकपूर्णां प्रणीतां

स्थापयेत्। तत आसादितमिध्ममादाय प्रणीताभिरद्भिरभ्युक्ष्य, प्रजापतिं मनसा स्मृत्वा अग्नावादध्यात्। आस्तीर्णशेषाद्बर्हिषः कुशद्वयमादाय सव्ये कृत्वा प्रादेशमात्रं मिमीय व्रीहियवाद्यौषधिमन्तर्धाय मन्त्रेण छिनत्ति न नखेन। प्रजापतिर्यजुः पवित्रे छेदने विनियोगः। "ॐ पवित्रे स्थो वैष्णव्यौ।" ते पवित्रे सव्येन मूलदेशे गृहीत्वा प्रजापतिर्यजुः पवित्रे अनुमार्जने विनियोगः। "ॐ विष्णोर्मनसा पूते स्थ" इति प्रणीताभिरद्भिः प्रक्षालयेत्। आज्यस्थालीमात्माग्न्योरन्तराले संस्थाप्य, तस्यां उदगग्रे पवित्रे संन्यस्य, उत्तरत आसादितमाज्यमादाय सपवित्रायामाज्यस्थाल्यामावपेत्। ततोऽङ्गुष्ठाभ्यां पवित्रे मूलदेशे गृह्य, अनामिकाभ्यामग्रदेशे गृहीत्वा प्रजापतिर्यजुराज्यं देवता आज्योत्पवने विनियोगः। "ॐ देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः।" इति मन्त्रेण आज्यस्थालीस्थमाज्यं पश्चिमभागस्थं पवित्राभ्यामूर्ध्वं नीत्वा। एवं तूष्णीं वारद्वयं मध्यदेशे पूर्वदेशे च उत्पूय, पवित्रे सव्येनादाय, दक्षिणेन प्रणीताभिरद्भिः सम्प्रोक्ष्याग्नौ प्रक्षिपेत्। अग्नौ आज्यमधिश्रित्योदगुद्वास्य, अग्नेः पश्चादासादयेत्। ततः प्रसेचनम्—अदिते ऽनुमन्यस्वेति प्रजापतिरेकपदा गायत्रीच्छन्दोऽदित्यनुमतिसरस्वत्यो देवता अञ्जलिप्रसेचने विनियोगः। प्रणीतास्थजलं हस्तद्वयेनादाय अग्नेर्दक्षिणतः अदितेऽनुमन्यस्वेति प्रसिञ्चेत्। ॐ अनुमतेऽनुमन्यस्वेति पश्चात्। ॐ सरस्वत्यनुमन्यस्वेत्युत्तरतः। ततः पर्युक्षणम्। हस्तेन जलमादाय देवसवितरिति प्रजापतिस्त्रिष्टुप् सविता पर्युक्षणे विनियोगः।

ॐ देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिम्भगाय। दिव्यो

गन्धर्वः केतपूःक्रेतन्नः पुनातु वाचस्पतिर्वाचन्नः स्वदतु ॥ एवं प्रदक्षणमग्निं सकृत्त्रिर्वा पर्युक्षेत् । ततो दक्षिणेन समिदक्षतमादाय, वसिष्ठो यजुः कालाग्निरुद्रो देवता जपे विनियोगः ।

ॐ तपश्च तेजश्च श्रद्धा च ह्रीश्च सत्यञ्चाक्रोधश्च त्यागश्च धृतिश्च धर्मश्च सत्त्वञ्च वाक्च मनश्चात्मा च ब्रह्म च तानि प्रपद्ये तानि मामवन्तु भूर्भुवः स्वरों महान्तमात्मानं प्रपद्ये विरूपाक्षोऽसि दन्ताञ्जिस्तस्य ते शय्या पर्णे गृहा अन्तरिक्षे विमितꣳ हिरण्मयं तद्देवानाꣳ हृदयान्ययस्मये कुम्भे अन्तः सन्निहितानि तानि बलभृच्च बलसाच्च रक्षतो प्रमनी अनिमिषतःसत्यं यत्ते द्वादश पुत्रास्ते त्वा संवत्सरे संवत्सरे कामप्रेण यज्ञेन याजयित्वा पुनर्ब्रह्मचर्यमुपयन्ति त्वन्देवेषु ब्राह्मणोऽस्यहं मनुष्येषु ब्राह्मणो वै ब्राह्मणमुपधावत्युप त्वा धावामि जपन्तं मा मा प्रतिजापीर्जुह्वन्तं मा मा प्रतिहौषीः कुर्वन्तं मा मा प्रतिकार्षीस्त्वां प्रपद्ये त्वया प्रसूत इदं कर्म करिष्यामि तन्मे राध्यतां तन्मे समृध्यतां तन्म उपपद्यतां समुद्रो मा विश्वव्यचा ब्रह्माऽनुजानातु तुथो मा विश्ववेदा ब्रह्मणः पुत्रोऽनुजानातु श्वात्रो मा प्रचेता मैत्रावरुणोऽनुजानातु तस्मै विरूपाक्षाय दन्ताञ्जये समुद्राय विश्वव्यचसे तुथाय विश्ववेदसे श्वात्राय प्रचेतसे सहस्राक्षाय ब्रह्मणः पुत्राय नमः ॥

इत्यन्तं पठित्वा अक्षतमग्नेः प्रादक्षिण्येन समाचारात् ब्रह्मणे दत्वा, तथैव हस्तम्परावर्त्याग्नौ समिधम्प्रक्षिपेत् । ततः स्रुवञ्च दक्षिणेनादाय, आसादितोष्णोदकेन प्रक्षाल्य, सव्ये कृत्वा, संमार्गकुशाग्रैर्मूलतोऽग्रपर्यन्तं स्रुवं सम्मृज्य, दक्षिणेनादाय, अधोमुखं प्राञ्चमग्नौ प्रताप्य, सव्ये कृत्वा, प्रणीताभिराद्भिः पुनः

संमार्ज्य प्रतप्य, आत्माग्न्योरन्तरे आज्योत्तरत आसादयेत् । ततो व्याहृतित्रयं हुत्वा—व्याहृतीनां विश्वामित्रजमदग्निभरद्वाजाः गायत्र्युष्णिगनुष्टुबग्निवायुसूर्याः, समस्तानाम्प्रजापतिर्बृहती प्रजापतिः होमे विनियोगः । ॐ भूः स्वाहा । इदमग्नये न मम ॥ ॐ भुवः स्वाहा । इदं वायवे न मम ॥ ॐ स्वः स्वाहा । इदं सूर्याय न मम ॥

ततः पङ्क्त्याकारेणोपविष्टान् शिष्यान्पाठयेद्गायत्री संहिताव-

२ ९ ३ १२ २१ ३ २ २ ३ १ २

त्—ॐ "तत्सवितुर्वरेण्यम्" इति प्रथमम् । ततो "भर्गो देवस्य

२ ३ १ २ ३ १ २

धीमहि" । ततो "धियो यो नः प्रचोदयात्" । ततोऽर्द्धर्चशः । पुनः

४२ ५ ४ ५२ ४ ५ ४ २ १

समस्ताम् । ततः सावित्रं साम । ॐ सोमꣳ राजानं वरुणम् । अग्नि-

१२ २ १ २ २ २१ १ २ १२ १ २

मन्वार भामहे ३। होवा३हायि । आदित्यं विष्णुꣳ सूर्यम् । होवा

२ २ १२ २ १ २ २ १ २ २

३ हायि । ब्रह्माणा २३ ञ्चा ३। होवा ३ हायि । बृहा ३ उवा

३ ५

३। पा २३४ तीम् ॥

ततो वेदस्य आदितः पर्वनामानि पाठयेत् । ॐ ओग्नायि ।

५ २ ४ ५ ४ ५

तद्वोहोवा । उच्चा । एवम् । ( पृष्ठे ४४, पङ्क्तौ ११ द्रष्टव्यानि )

१ ३ १ २ ३ १ २ ३ २ ३ १ २

ततश्छन्दोहोमः । ॐ अग्न आयाहि वीतये गृणानो हव्यदातये ।

१ ९२ ३ १ २

निहोता सत्सि बर्हिषि स्वाहा । एवं हुत्वा । इदं गायत्र्यै न ममेति त्यागः, एवं सर्वत्र ।

३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ २

ॐ पुरु त्वा दाशिवाꣳ वोचेरिरग्ने तव स्विदा । तोदस्येव

३ २ ३ १ २

शरण आ महस्य स्वाहा । इदं उष्णिहे० ।

२ ३ १ २ ३ १ २ ३ २ ३ १ २ १ २ ३ १२ २र
ॐ अग्न आजिष्ठमाभर द्युम्नमस्मभ्यमध्रिगो । प्र नो राये पनी
३ २ ३ १ २ ३ १ २
यसे रत्सि वाजाय पन्थाम् स्वाहा । इदं अनुष्टुभे० ।

३ १ २ २ १ २ ३ १ २ ३ १ १ २ ३ २ ३
ॐ यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे । प्र प्र वयम-
१ २ ३ १ २ ३ २ ३ १र २र
मृतं जातवेदसं प्रियं मित्रं नशंसिषम् स्वाहा । इदं बृहत्यै० ।

३ २ ३ १ २ ३ २ ३ १ २ ३क २ २र २र
स्वादोरित्था विषूवतो मधोः पिबन्ति गौर्यः । या इन्द्रेण
३ १ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
सयावरीर्वृष्णा मदन्ति शोभथा वस्वीरनु स्वराज्यं स्वाहा ।
इदं पङ्क्त्यै० ।

१ २ ३ १ २ ३ १र २र ३ १ २
आ जुहोता हविषामर्जयध्वं नि होतारं गृहपतिं दधिध्वम् ।
३ २ ३ १र २र ३ १ २ ३ १ २ ३ २ क३ २र
इडस्पदे नमसा रात हव्यं सपर्यता यजतं पस्त्यानाम् स्वाहा ।
इदं त्रिष्टुभे० ।

३ २उ ३ १ २ ३ २ ३ २उ ३ १ २ ३ २ ३ १ २
चित्र इच्छिशोस्तरुणस्य वक्षथो नयो मातरावन्वेति धातवे ।
३ १र २र ३१ २ २ २ ३ १ २ ३ १र २र ३ २ २
अनुधायदजीजनदधाचिदा ववक्षत्सद्योमहि दूत्य३ श्चरन् स्वाहा ।
इदं जगत्यै० ।

१ २३२ ३१ २ ३ १ २ ३१ २ ३ १ २ ३ १ २
प्रवोमहे मतयो यन्तु विष्णवे मरुत्वते गिरिजा एव या मरु-
१र २२३ १र २र ३ १ २ ३१ २ ३ १ २ ३ १ २ ३
त् । प्रशर्द्धाय प्रयज्यवे सुखादये तवसे भन्दादिष्टये धुनि व्रताय
१ २
शवसे स्वाहा । इदं अतिजगत्यै० ।

१ २ ३ १२ २२ ३ १ १ ३ १ २ २
प्रोष्वस्मै पुरोरथ मिन्द्राय शूषमर्चत । अभि केचिदुलोक कृत
२ २ ३ १ २ ३ २ ३ २ १ ३ १२ २२ ३ १ २ ३
सङ्गे समत्सुवृत्रहा । अस्माकं बोधि चोदितानभन्तामन्यकेषां ज्या-
२उ ३ १ २
का अधि धन्वसु स्वाहा । इदं शक्वर्यै० ।
२ ३ १२ ३२ ३ १ २ ३१२ २२ ३ २ ३ १ २ ३ २
तव त्यं नर्यं नृतोप इन्द्र प्रथमं पूर्व्यं दिवि प्रवाच्यं कृतम् ।
२ ३२ ३ १२३ १ २ ३ १ २ ३ २ ३ २ २ ३ १ २ ३ १ २ ३
यो देवस्य शवसा प्रारिणा असुरिणन्नपः । भुवो विश्वमभ्य देव
१ २ ३ १२ २२ ३१ २ ३ १२ २२
मोजसा विदेदूर्जं शतक्रतुर्विदे दिषं स्वाहा । इदमतिशक्वर्यै० ।
१ २ ३ १२ २२ २ २ ३ १२ २२ ३
त्रिकद्रुकेषु महिषो यवाशिरन्तु विशुष्म स्तृम्पत्सोममपिब-
१ २ ३ १ २ ३ २ १ २ ३ १ ३ २३ १ २ ३२ ३ १२
द्विष्णुना सुतं यथा वशम् । स ईं ममाद महि कर्म कर्त्तवे महामुरुं
२२ ३ २ ३ २ ३ १२ २२ ३ १२ २२
सैनं सश्चद्देवो देवं सत्यइन्दुः सत्यमिन्द्रं स्वाहा । इदमष्ट्यै० ।
२ ३ १ २ ३ २ ३ १ ३ १ २३ २२ २२ ३ १
अस्तु श्रौषट् पुरो अग्निं धिया दध आनुत्यच्छर्द्धो दिव्यं
२ २ १ २ २ ३ १ २ ३१ २ ३ २ ३ १ २ ३
वृणीमह इन्द्रवायू वृणीमहे । यद्धक्राणा विवस्वते नाभा सन्दाय
१ २ २ ३ २ ३१२ २२ ३ १ २ ३ १ २ ३ २ ३ १२
नव्यसे । अधप्रनूनमुपयन्ति धीतयो देवां अच्छा न धीतयः
स्वाहा । इदमत्यष्ट्यै० ।
२१ २ १२ १२२ १२
घर्मः मद्वक्कस्तन्वा समान्धे वृधे स्वाहा । इदं धृत्यै० ।
१ २ १ २ १ २ २ २ १
सर्पत प्रसर्पत सुवर्ग मे मते वयं स्वाहा । इदमतिधृत्यै० ।
१ २ १ २ २ १ २ १ २ १ २
संयमन्न व्यायमन्वियमन्नसमायमन् स्वाहा । इदं कृत्यै० ।

२ र १र २ १ २१ २र१ २१ २ र
चराचराय बृहत इदं वाममिदं बृहत् स्वाहा । इदं प्रकृत्यै० ।
१र २र १२ २ २ २र
द्यौरक्रान् भूमिरततनत्समुद्रꣳ समचुकुपन् स्वाहा । इदमाकृत्यै० ।
२र २ १२ २र १ २ १र २ १ २
ज्योतिष्पत स्वः पतान्तरिक्षं पृथिवीं पञ्च प्रदिशः स्वाहा ।
इदं विकृत्यै० ।

२ र २ १ २ १ र २ २ २र
मनो जयिद्धृदयमजायिदिन्द्रो जयिदहमजैषं स्वाहा । इदं
संकृत्यै० ।

१र २ र १ र र२ १ र २ १ २
प्रागन्यदनु वर्त्तते रजो प्रागन्यतमो पेशति भ्यसा स्वाहा ।
इदमभिकृत्यै० ।

१ २ १ १ २ २ १ २ १ १ २ १
अधिप । ताथि । मित्रप । ताथि । क्षत्रप । ताथि । स्वः पता-
१ २ — — १
थि । धनपता २ थि । ना २ माः स्वाहा । इदमुत्कृत्यै० ।
४

ततो गानपर्वादि होमः । यथा—ॐ ओग्नायि स्वाहा । इदमाग्ने-
५ र ४ ५ ५ ४
याय० ॥ तद्वौहोवा स्वाहा । इदमैन्द्राय० ॥ उच्चा स्वाहा । इदं
२ र २र १र
पावमानाय० ॥ यद्यावई स्वाहा । इदमर्काय० ॥ हाउ ।३। आयुः
१र २ १ २ र र
।३। सत्यम् ।३। इन्द्रनरो स्वाहा । इदं द्वन्द्वाय० ॥ हुवेवाचाम् स्वा-
१ — २ १ २ १
हा । इदं वाचोव्रताय० ॥ए २। विदामघवन्विदाः स्वाहा । इदं शक्र-
६ र २ ४र ५
यै० ॥ उच्चाता ३ यिजातमन्धसाः स्वाहा । इदं दशरात्राय० ॥
५ र २ ४ ५र ३ ४ ५र ४ ५र
वृषापा ३ वस्वधारया स्वाहा । इदं संवत्सराय० ॥ प्रत्यस्मैपिपी

१ २ १ २ ३ २ २ १ २
स्वाहा । इदमेकाहाय० ॥ पन्थंपन्थामित्सोतारः । पन्थं पन्थोवा
५ ३ २ ४२ ५
स्वाहा । इदमहीनाय० ॥ विशः । विशोऽवो आतिथायिं स्वाहा ।
२ १ २ १ २ १२ — १
इदं सत्राय० ॥ सत्नं सधस्थमा । होरसदात् स्वाहा । इदं प्राय-
२२ १२ २२ १२२ १ २S
श्चित्ताय० ॥ आभित्वा शूरनोनुमाः स्वाहा । इदं क्षुद्राय० ॥ आ-
२ २ १ २ २ २
भित्वा शूरनोनुमोवा स्वाहा । इदं दशरात्राय० ॥ पूनानः सोम
२ १ २ २ २ २ २ २ २
धारयोवा स्वाहा । इदं सम्वत्सराय० ॥ उहुवा ओहा औहोवा ।
२ २ १ २ १ २
पुरोजितायि स्वाहा । इदमेकाहाय० ॥ च्योहम् । प्रसुन्वाना २
२ २ २ १
स्वाहा । इदमहीनाय० ॥ माभेमप्राश्रमिष्मोवा स्वाहा । इदं सत्राय०॥
२२ २ २२ २ २ २ २ २
उहुवा ओहा औहोवा । तंवोदस्मां स्वाहा । इदं प्रायश्चित्ताय० ॥
२२ २ २ २ २ २
औहोयि यज्ञायज्ञावो अग्नया ३ ए स्वाहा । इदं क्षुद्राय० ॥

२ ३ १ २ ३ १ २ ३ २
अग्नआयाहीत्यृचं पठित्वा—अग्न आयाहि वीतये गृणानो
३ १ २ १२ २२ ३ १ २
हव्यदातये । निहोता सत्सि बर्हिषि स्वाहा । इदं छन्दस्यै न मम ॥
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ २१ २२
इन्द्र ज्येष्ठं न आभर ओजिष्ठं पुपुरिश्रवः । यद्दिधृक्षेम वज्र-
२ १ २ ३ १२ २२
हस्त रोदसी ओभे सुशिप्रपप्राः स्वाहा । इदमारण्यै० ॥
३ १ २ ३ २ ३ १२ २२ ३ १ २ १ २
विदा मघवन्विदा गातुमनुशꣳसिषोदिशः । शिक्षा शचीनां
३ १ २
पते पूर्वीणां पुरुवसो स्वाहा । इदं महानाम्नीभ्यः० ॥

१ २ ३ १२ ३१ २ ३ २ ३ १ ३१
उपास्मै गायता नरः पवमानायेन्दवे । अभि देवाँ इयक्षते स्वाहा । इदमुत्तरायै० ॥

महन्मे वोचो भर्गो मेऽवोचो यशो मेऽवोचः स्तोमं मेऽवोचो भुक्तिं मेऽवोचः सर्वं मेऽवोचस्तन्माऽवतु तन्मा विशतु तेन भुक्षिषीय स्वाहा । इदं ताण्ड्यब्राह्मणाय० ॥

ब्रह्म च वा इदमग्रे सुब्रह्म चास्तां स्वाहा । इदं षड्विंशाय० ।

ब्रह्म ह वा इदमग्र आसीत्स्वाहा । इदं सामविधये० ।

अथ खल्वयमार्षप्रदेशो भवति स्वाहा । इदमार्षेयाय० ।

अग्निरिन्द्रः प्रजापतिः सोमो वरुणस्त्वष्टाङ्गिरसः पूषा सरस्वतीन्द्राग्नी स्वाहा । इदं देवताध्यायाय० ।

अथातः सꣳहितोपनिषदो व्याख्यास्यामः स्वाहा । इदं सꣳहितोपनिषदे० ।

नमो ब्रह्मणे नमो ब्राह्मणेभ्यो नम आचार्येभ्यो नम ऋषिभ्यो नमो देवेभ्यो नमो वेदेभ्यो नमो वायवे च मृत्यवे च विष्णवे च नमो वैश्रवणाय चोपजाय च स्वाहा । इदं वंशब्राह्मणाय० ।

देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय । दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाचं नः स्वदतु स्वाहा । इदमुपनिषदे० ।

अथातः स्वरशास्त्राणां सर्वेषां वेदनिश्चयम् । उच्चनीचविशेषा द्विस्वरान्यत्वं प्रवर्त्तते स्वाहा । इदं शिक्षायै० ।

कल्पो ज्योतिष्टोमोऽतिरात्रोक्थ्यः षोडशीकः स्वाहा । इदं कल्पसूत्राय० ।

कल्पसूत्रं यदा नाधीतं भवति तदा दशानां सूत्राणां मध्ये यदधीतं भवति तन्नाम्ना होमः कर्तव्यः ।

अथ वाचोवृत्तिं व्याख्यास्यामः स्वाहा । इदं व्याकरणाय० ।

समाम्नायः समाम्नातः स व्याख्यातव्यस्तमिमं समाम्नायं निघण्टव इत्याचक्षते स्वाहा । इदं निरुक्ताय० ।

अथातश्छन्दसां विचयं व्याख्यास्यामः स्वाहा । इदं छन्दोभ्यो० ।

पञ्च संवत्सरमयं युगाध्यक्षं प्रजापतिम् । दिनर्त्वयनमासाङ्गं प्रणम्य शिरसा शुचिः स्वाहा । इदं ज्योतिषे० ।

ततो व्याहृतिचतुष्टयम् , पुनस्त्रयञ्च हुत्वा, समिधं हुत्वा, देवसवितरिति मन्त्रेणाग्नेः परितः पूर्ववदनुपर्युक्ष्य "ॐ अदितेऽन्वमꣳस्थाः । ॐ अनुमतेऽन्वमꣳस्थाः ! ॐ सरस्वत्यन्वमꣳस्था इति दक्षिणपश्चिमोत्तरतः प्रसेकान्विधाय, स्तरणावशेषितबर्हिर्मुष्टिं दक्षिणेनादाय । प्रजापतिर्यजुर्विश्वेदेवाः बर्हिरभ्यञ्जने विनियोगः । "ॐ अक्तुꣳरिहाणा व्यन्तु वयः" इति मन्त्रेणाज्यस्थालीस्थ आज्ये अग्राण्यभ्यज्य, द्विस्तूष्णीमभ्यज्य, मध्यमपि मन्त्रेण सकृद्विस्तूष्णीञ्चाभ्यज्य, तथैव मूलदेशमभ्यज्य, सव्ये कृत्वा, प्रणीतास्थजलेनाभ्युक्ष्य, दक्षिणेनादाय, प्रजापतिरनुष्टुब्रुद्रो बर्हिर्होमे विनियोगः । "ॐ यः पशूनामधिपती रुद्रस्तन्तिचरो वृषा ! पशूनस्माकं माहिꣳसीरेतदस्तु हुतं तव स्वाहा ।" इति हुत्वा, इदं रुद्राय पशुपतये न ममेति त्यागः । उदकोपस्पर्शः । ततः प्रजापतिर्यजुर्वसवो होमे विनियोगः । "ॐ वसुभ्यः स्वाहा" इति स्रुवेणाज्यं हुत्वा, वसुभ्यो न ममेति त्यागः । ततः प्रदक्षिणमग्निं परिक्रम्य, चमसं निनीय, पुनः

पूरयित्वा, स्थाने निदध्यात्। ततो दक्षिणे पाणौ रक्षाबन्धनं हिरण्य
२र १ २ र
भूषितां यवसर्षपपोटलिकां विचित्रतन्तुबद्धाम्। ए। रक्षत नो रक्षि-
१ २ १ २र १ २र २ १र
तारो गोपायत गोपायितारः इति मन्त्रेण। "येन बद्धो बली राजा
दानवेन्द्रो महाबलः। तेन त्वामनुबध्नामि रक्षे मा चल मा चले-
२२ २ २ १र २ १ २ २ १र
ति"। तुवंयवाइ। छदाशु २३ षाः। नृःस्पाहि श्रू। णुहीगा
२ १ २ २ २ २ र
२३ इराः। रक्षातो ३ का ३ म्। उता २३ हा ३४३ यि। त्मा
५ ५
२३४ नो ६ हायि। इत्यनेन वा रक्षाबन्धनम्। यज्ञोपवीतधारणम्–

आचम्य प्राणानायम्य। सूत्रोत्पादने ब्रह्माणं ध्यायामि।
१ २ र १ २ २
ब्रह्मा। ब्रा २३ ह्मा। यज्ञानं प्रथमं पुरास्तात्। विसायि।
२ र र २ २ १ २
वा २३ यि सी। मतः सुरुचो वेन आवः। सबू। सा २३ बू।
र र २ २ २ २ र
ध्नया उपमा अस्य वायिष्ठाः। सताः। सा २३ ताः। चयो-
२ २ २
निमसतश्चवायिवा ३४३ः। ओ २ ३४५ इ। डा॥
५ ६ १ ^ ३

त्रिगुणीकरणे विष्णुर्ध्यायामि॥ इदा ६ मे। विष्णू २ः। वि-
२ ३ ५ १ र २ १ २ – १ –
चक्रा२३४ मायि। त्रायिधानि। दधायिपा १ दा २ मू। समू २
५ १ २ १ ^ ३ ५र र २
ह्रो १। ढा २३ मा ३। स्या २ पा २३४ औहोवा। ए ३।
२
सुळे १॥ ततः–आपोहिष्ठा० से॥ योवः शि० रः॥ तस्मा०
नः॥ इति तिसृभिः प्रक्षाल्य। ॐ तत्स० त्। इति गायत्र्या

४२ ९१२ १ ४ ३ २
त्रिगुणीकृत्य । ग्रन्थिबन्धने रुद्रन्ध्यायामि । आवोराजा । नम-
३ २̂ ३ ४ ५ १ २र १ २ २̂ ३ ४
ध्व । रस्य रुद्राम् । हो । ता । राम् । स । त्ययजा ३ म् । रोदसी-
५ २ १ २ ३ २^३ ४ ५ १ २ १
योः । अग्निं पु । रा । तनयि । त्नोरचित्तात् । हिरण्य । रू ।
२ १ २ २ ४
पा ३ मव । सा ३४३ यि । क्रा ३ पूँ ५ ध्वा ६५६ म् ॥ इति ध्यात्वा दशकृत्वो गायत्र्याऽभिमन्त्रिताभिरद्भिः सम्प्रोक्षेत् । एवं संस्कृतमुपवीतं हस्ताभ्यामादाय, "हरये नमः । ब्रह्मणे नमः । ईश्वराय नमः" इति नत्वा, गायत्र्याऽभिमन्त्र्य, दक्षिणं बाहुं प्रवेश्य वामस्कन्धे धारयेन् मन्त्रेण यथा—यज्ञोपवीतमिति परमेष्ठी प्रजापतिस्त्रिष्टुप् यज्ञोपवीतं श्रौतस्मार्त्तकर्मानुष्ठानसिध्यर्थं यज्ञोपवीतधारणे विनियोगः । "ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ ॐ यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि ।" तत आचम्य । "ॐ समुद्रं गच्छ स्वाहा" इति पूर्वधृतमुपवीतमुत्तार्य जले निक्षिपेत् ।

३ १ २
ततः सर्वे धानावन्तमिति मन्त्रेण धाना भक्षयेयुः—"धानावन्तं
३ १ २ ३ १ २ ३ २ २ १ २ ३ १ २
करंभिणमपूपवन्तमुक्थिनम् । इन्द्र प्रातर्जुषस्व नः ॥" असंस्वादन्निगीर्य, अनाचान्ता एव दधिक्राव्ण इति दधि भक्षयेयुः—"दधिक्राव्णो
३ १र २र ३ १ २ ३१२ ३ १ २ ३ २ ३
अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभिनो मुखाकरत् प्र न
२ २
आयूंषि तारिषत् ।" ततः समाचान्ताः शिष्याः पङ्क्त्याकारेणोप-

विशेयुः । एतस्मिन्नेव काले आचार्योऽपि प्रतिसरबन्धनादि कुर्यात् । तत आचार्यः ॥अग्न आयाहीत्यादिऋक्त्रयं तान्येव त्रीणि सामानि स्वपठनादि शिष्यान्पाठयेत् । ॐ अग्न आयाहि वीतये गृणानो हव्यदातये । निहोता सत्सि बर्हिषि ॥१॥ त्वमग्ने यज्ञानाᳩहोता विश्वेषाᳩहितः । देवेभिर्मानुषे जने ॥२॥ अग्निंदूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥३॥ ओग्नायि । आयाही ३ वोयितोया २ यि । तोया २ यि । गृणानो ह । व्यदातोया २ यि । तोया २ यि । नायि होता सा २३। त्सा २ यिबा २३४ औहोवा । ही २३४ षी ॥१॥ अग्नआया हिवी । तयायि । गृणानोहव्यदाता २३ यायि । निहोतासत्सि बर्हा २३ यिषी । बर्हा २ यिषा २३४ औहोवा । बर्ही ३ षी २३४५ ॥२॥ अग्न-आयाहि । वा५यितयायि । गृणानोहव्यदा १ ता ३ ये । निहोता २३४ सा । त्सा २३ यिबा ३। हा २३४ यिषो ६ हायि ॥३॥

एवं पठित्वा, ब्राह्मणभोजनपूर्णपात्रादिसङ्कल्पं कुर्यात्–"कृतस्यैतत्कर्मणः समृद्ध्यर्थं यथासम्पन्नेनान्नेन तृप्तिपर्यन्तेन भोजनेन यथाकाले एकं ब्राह्मणमहं भोजयिष्ये ।" ततः–"कृतस्यैतत्कर्मणः साङ्गतासिद्ध्यर्थं दास्यमानं ( दीयमानं वा ) पूर्णपात्रं ब्रह्मणे तुभ्यमहं सम्प्रददे ।"

२र १ २ १ २ १
हाऊ । ३ । ह हाउ । ३ । हह हाउ । ३ । कया २३ उ । ३ ।
२ १ २ — २ १ र र २ १
हा ३ ओ २३ । २ । हा ३१ उ वा २। अभित्वा शूरनो ३। आउ ।
३ ५ २र २ १र २ १ २र १ २
वा २३ । नू २३४ माः । इडा । ३ । ज्योतिष्पत स्वः पतान्तरिक्षं
१र २ १ २ १ र २र १र १ र २
पृथिवीं पञ्च प्रदिश ऋषीन्देवान्वर्णम् । अदुग्धा इव धा ३१ उवा
३ ५ २र र १र २ १ २र १ २र
२३ ई । ना २३४ वाः । इडा । ३ । ज्योतिष्पत स्वः पतान्तरिक्षं
१र २ १ २ १ र २र १र १र र २
पृथिवीम्पञ्च प्रदीश ऋषीन्देवान्वर्णम् । ईशानमस्य जगतः सुवा ३
३ ५ २र र १र १ २र १ २
१ उवा२३ । ह २३४ शम् । इडा । ३ । ज्योतिष्पत स्वःपतान्तरिक्षं
१र २ २ २ १ र २र १र १रर
पृथिवीम्पञ्च प्रदीश ऋषीन्देवान्वर्णम् । ईशानमिन्द्रता ३१ उवा
३ ५ २र र र २ १ २र २ २
२३ । स्थु २३४ षाः । इडा । ३ । ज्योतिष्पत स्वःपतान्तरिक्षं
२र २ १ २ १ र २र १र २र १ २
पृथिवीम्पञ्च प्रदीश ऋषीन्देवान्वर्णम् । हाउ । ३ । हहाऊ । ३ ।
१ २ १ २ २ २
हहहाऊ । ३ । कया २३ ऊ । ३ । हा ३ ओ २३।२। हा ३१
—२र १ र २र १
उ वा २ । ए । व्रतमे सुवरे शकुनः ॥ पृष्ठ्यः षड़हो महाव्रतमतिरात्रः सप्तर्षय एतेनार्ध्नुवꣳस्तेनर्द्धिस्तस्मादेतेन यजन्त ऋध्या एव सप्त शिरसि प्राणा इन्द्रियाणीन्द्रियाण्येवैतेनाप्नोति सप्त ग्राम्याः पशवस्तानेतेनाप्नोति एतꣳ सप्तमस्याह्नः पृष्ठं भवति वद्ध्यनासमन्नं वै व्रतमन्नाद्यमेवैतेनाप्नोति पृष्ठ्यः षड़हो भवति प्रत्यक्षमृध्यै प्रत्यक्षꣳ ह्येतेन सप्तर्षय आर्ध्नुवन्नृध्या एव ॥ ॐ प्रथमस्त्रिवर्गः सावित्रं गा-

यत्रं महानाम्न्यश्चैषामृता नाम सꣳहितैतया वै देवा अमृतत्वमाय-न्नमृतत्वमेति य एवं वेद ॥ ततो वामदेव्यं गायेत् ।

कयानश्चित्रेति वामदेव ऋषिः गायत्री छन्दः इन्द्रो देवता शा-
३ २ ५ ४ २ ४र
न्त्यर्थे जपे विनियोगः । का ५ या । नश्चा ३ इत्रा ३ आभु-
५ १ र २१र २ १ २ र २ १
वात् । ऊ । ती सदावृधः स । खा । औ ३ हो हाइ । कया
२^ ३ र २ १ — १ ^ २
२३ शचायि । ष्ठयौ हो ३ । हुंमा २ । वा २ तों ३५ हायि
२ र ४ २ ४र ५ १ २ र
॥ १ ॥ का ५ स्त्वा । सत्यो ३ मा ३ दानाम् । मा । ꣳहिष्ठो
२ २ १ २ र २ १ २^ ३ र
मात्सादन्ध । सा । औ ३ होहाइ । दृढा २३ चिदा । रुजौ
२ १ — १ ^ २ ३ र
३ो ३ । हुंमा २ । वा २ सो ३५ हायि ॥ २ ॥ आ ५ भी ।
४ २ ४ ५ १ २र १ २र १ २
षुणा ३ः सा ३ खीनाम् । आ । विताजराइ तॄ । णाम् । औ
र २ १ २^ ३ र २ २ — २
३ होहाइ । शता २३ म्भवा । सियौ हो ३ । हुंमा २ । ता
^ २ १ २ ३ १ २र ३ २ ३ १ २ ३ १ २
२ यो ३५ हायि ॥३॥ कया नश्चित्र आभुवदूती सदा वृद्धः सखा ।
३ १ २ ३ २ १ २ ३ १ २र ३ १ २ ३
कया शचिष्ठया वृता ॥ कस्त्वा सत्यो मदानामꣳहिष्ठो मत्स-
२ २ ३ १ २ ३ २ ३ १ २ ३ २उ ३ १ २ ३ १ २ २ २
दन्धसः । दृढा चिदारुजे वसु ॥ अभीषुणः सखीनामविता जरितॄ-
२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
णाम् । शतम्भवा स्यूतये ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः
३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ २ ३
पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृह-

१ २ ३ २ ३ २ ३ १ २
स्पतिर्दधातु ॥ ॐ स्वस्ति नो बृहस्पतिर्दधातु ॥ चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च । हूयते च पुनर्द्वाभ्यां तस्मै यज्ञात्मने नमः ॥

तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्य आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्म्मिकान्विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिंसन्त्सर्वभूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वसन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्त्तते न च पुनरावर्त्तते ॥ इति उपाकर्मादौ पठेत् ।

इत्युपाकर्मप्रयोगः ॥

---

## अथोत्सर्गप्रयोगः ।

ततस्तद्दिनमारभ्य भाद्रपदमासीयहस्तादधस्तनपुष्यनक्षत्रं यावद्गृहमानीतानामृषीणां प्रत्यहं पूजनम् । पुष्यनक्षत्रयुतेऽहनि प्रातरेव साशिष्यः प्राङ्मुखो उदङ्मुखो 'वा ग्रामाद्बहिर्नद्यादौ गत्वा, यथाविधिना ऋषीन्पूजयेत् । तत्र देशकालौ सङ्कीर्त्य "छन्दसामाप्यायनार्थं यातयामत्वदोषनिवृत्तये वेदोत्सर्गकर्मणि ऋषीणां पूजनतर्पणादिकर्माहं करिष्ये" इति सङ्कल्प्य, आवाहनं विना पूर्ववत् ऋषीन्सम्पूज्य, तथैव तर्पयित्वा, पुनः सम्पूज्य, विसर्ज-
१ २ २ २ २ २ १ १ — २२ १
नं कुर्यात्—सुतासोमा ३ हा । धूमचामा २ः । सोमा-
२ ३ २ १ — २ २ २ ३२ २ १
इन्द्रा ३ हा । यमन्दाइना २ः । पवित्रवा ३ हा । तो अक्षारा
— १२ २ २ २ ३ २ २ ५ ४
२ न् । देवानूगच्छा ३ हा । तुषो ३ । हो २३४ । वा । मा५दो

५
६ हायि ॥ इति विसृज्य, ऋषीन्प्लवसाम्ना प्लावयित्वा ( पृ० ३२, पं १० ) एतानि समानि पठेत्--

४ — १ १ २ १ २ २ २र
हा २ ऊवाक् । ३ । होवा । २ । होवा ३ । हाउवा । ए ।
२ १ २ १र र २र १ २ १र२ १ र २ १ २ १ ३ १ १ १ १
तोकं प्रजां गर्भो नो यमद्ध्मह्याच पराच पथिभिश्चरन्ता २३४५ः ॥
४ — १ १ २ २ १ २ १ १ २र
हा २ ऊवाक् । ३ । होवा । ३ । अयऽसशिङ्क्षे ३ । होई । यस्मा
२र र २ १र २र १ १ २ १ २ १ १ २र
द्यावापृथिवी भुवनानि चक्रदुः । होइ । अयऽसशिङ्क्षे ३ । होइ । यस्मा-
१र२ १र २ १र २र १ १ २ १ २ १
दाप ओषधयो भुवनानि चक्रदुः । होइ । अयऽसशिङ्क्षे ३ । होइ ।
१ र २ १ र २र १ १ २ १ २ १
यस्मात्समुद्रिया भुवनानि चक्रदुः । होइ । अयऽसशिङ्क्षे ३ । होइ ।
१ २र १ २ २१र २र १ १ १ — १
यस्माद्विश्वा भूता भुवनानि चक्रदुः । होइ । हा २ ऊवाक् । ३ ।
२ १ २ २ २र २ २ १ ३ १ १
होवा । २ । होवा ३ । हाउवा । ए । आपः । २ । आपा २३
१ १ १ — १ १ २ २र ^ ३ २र
४५ः ॥ हा २ ऊवाक् । ३ । होवा । ३ । येभिर्विया । श्वमै-
१ — २र ^ ३ २र १ — २र र ^ ३ २
राया २ः । तेभिर्विया । श्नुहीमादा २ सु । येभिर्भूतासु । सहः
१ — २र १र २ १र २ १ — २र १ २
साहा २ः । तेभिस्तेज आपः । आपा २ः । येभिर्यन्तरिक्ष-
१र २ २ २र १ २ १ ३ १ १ १ १
मैरया ३ः । हाउवा । ए । आपः । २ । आपा २३४५ः ॥
१ — १ १ २ १ र र र —
हा २ ऊवाक । ३ । होवा । ३ । यज्ञायथा अपूहो २ ।
१ — १ — १ — १ र —
वांया २ । मघवन्वृत्रहाहो २ । रथाया २ । तत्पृथिवीमप्राहो २ ।

१ — १ २ — १ — १ —
थाया २ः । तद्दस्तभ्ना ऊ३ोहो २ यि । दायित्रा २ म् । हा २
१ १ २ १ २ १ २ २ २र ११ र २ १
ऊवाक् । ३ । होवा । होवा । होवा ३ । हाउवा । ए । तेजो घर्मः
२ र २ २ २ २ र र १ र २र १र २ र १ २ १ २र ^ ३
सङ्क्रीडन्ते शिशुमतीर्वायुगोपास्तेजस्वतीर्महद्भिर्भुवनानि चक्रदु
२ १ १ १
२३४५ः ॥ तेजो वै गायत्री छन्दसान्तेजो रथन्तरꣳसाम्नां तेज-श्चतुर्विꣳशः स्तोमानान्तेज एव तत्सम्यक् सन्दधात्यपिह पुत्रस्य पुत्रस्तेजस्वी भवति ॥ ततो निमन्त्र्याचम्य गृहमागच्छेयुः । तत आपुनरुपाकरणाच्छन्दसामनध्यायोऽन्यत्र ब्रह्मयज्ञात् ।

इत्युत्सर्गप्रयोगः ।

---

## परिशिष्टप्रकरणम् ।

### उपाकर्मणि सङ्कल्पे विशेषः ।

मम जन्मप्रभृत्यद्यतनदिनं यावत् वाङ्मनःकायकृतानां बुद्धिपूर्वाबुद्धिपूर्वाणां सकृदभ्यासविषयाणां महापातकातिपातकोपपातकानां शोधनार्थं सकलपापक्षालनार्थं छन्दसां अस्थानोच्छ्वासात्रिच्छेदैः प्रमादिकैश्च घोषणाध्यापनाद्यनध्यायाधीताऽध्ययनदोषनिवृत्त्यर्थं परद्रव्यापेक्षया प्रवर्द्धितलोभाच्छन्दसां पराधीनतया प्रयुञ्जितत्वदोषनिवृत्त्यर्थं द्रव्याध्ययनयोर्विनिमयेन अध्यापनादिदोषनिवृत्त्यर्थं अनधिकारिभिश्छन्दःश्रवणाद्यनेकदोषनिवृत्त्यर्थं छन्दसां यातयामत्वदोषनिवृत्त्यर्थं अयातयामत्वफलप्राप्त्यर्थं ब्रह्माद्याद्यनेकदिवौकसां गौतमाद्याद्यनेकऋषीणां च जलार्थीतयाऽऽगमनेन मम शरीरे अशेषोपार्जितपापप्र-

शमनार्थं गौतमादिसप्तर्षीणां अरुन्धतीगणेशगोभिलाचार्यप्रवचनकर्तृदुर्गासहितानां आवाहनादिस्थापनप्रतिष्ठापूजनतर्पणकरणेऽधिकारार्थं, ( उत्सर्गश्चेत् पूजनतर्पणउत्सर्जनकरणेऽधिकारार्थं ) अस्यां भागीरथ्यां, अस्यां नद्यां वा, अस्मिन् तडागे वा स्नानविधिना स्नानमहं करिष्ये ।

---

## अथ विष्णुपूजनम् ।

तत्र आचमनप्राणायामान्ते सङ्कल्पः–देशकालौ सङ्कीर्त्य "गौतमादिसप्तर्षीणामरुन्धती–गणेश–गोभिलाचार्य–प्रवचनकर्तृदुर्गासहितानामावाहनादिस्थापन–प्रतिष्ठा–पूजनतर्पणोपाकर्मकरणेऽधिकारार्थं ( उत्सर्गश्चेत् 'पूजनतर्पणोत्सर्गकरणेऽधिकारार्थं ) श्रीविष्णोः प्रीत्यर्थं विष्णोः षोडशोपचारैर्देहन्यासपूर्वकं यथाशक्ति पूजनमहं करिष्ये ।" तत इदं विष्णुरित्येकमन्त्रेण षोडशभिर्वा मन्त्रैः स्वदेहे न्यासं कुर्यात् । तत्र अङ्गक्रमो यथा–"करयोः पादयोर्जान्वोः कट्योर्नाभौ हृदि क्रमात् । कण्ठे बाह्वोर्मुखे नेत्रे मूर्ध्नि वामाङ्गतो न्यसेत् ॥" स्वदेहे न्यासं कृत्वा तथैव देवे न्यासं कुर्यात् । षोडशर्चपक्षे न्यासपूजनक्रमो यथा––

३ २उ ३ १२ ३ १ २र ३२ १२
ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳ
३२
सुले ॥ वामकरे न्यासः । पूजने तु–भगवते श्रीमहाविष्णवे नमो
ध्यायामि ।

१ २ ३ १ २र ३ १ २ ३ १ २ २ ३ १ २
त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि
३ १ २
धारयन् ॥ दक्षिणकरे । आसनं समर्पयामि ।

२ ३ १ २ ३ १ २ ३ १ २ ३ २ १ २ ३ २ ३
विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः
२ २
सखा ॥ वामपादे । पाद्यं सम० ।
२ २र ३ २ ३ १ २र ३ १ २ ३ २ ३ २ ३
तद्विष्णोः परमं पदँ सदा पश्यन्ति सूरयः । दिवीव चक्षु-
१ २
राततम् ॥ दक्षिणपादे । अर्घ्यम्० ।
१ २र ३ १ २ ३ २ ३ २ १ २ ३ १ २३२
तद्विप्रासो विपन्युवो जागृवाँसः समिन्धते । विष्णोर्यत्परमं
३ २
पदम् ॥ वामजानुनि । अर्घ्यान्ते आचमनीयम्० ।

अत्र ऋषिपूजनप्रकरणोक्ततत्तन्मन्त्रैः ( पृ० ७, पं० ३ )
१ २ ३ १ २ ३ २ ३ १ २
पञ्चामृतस्नानं कार्यम् । ततः—अतो देवा अवन्तु नो यतो विष्णु-
३ २ ३ १ २ ३ १ २
र्विचक्रमे । पृथिव्या अधि सानवि ॥ दक्षिणजानुनि । शुद्धोद-
१ २र
कस्नानम्० । स्नानान्ते—'तद्विप्रासो'० इति मन्त्रेणाचमनीयम् ।
३ २ ३ १ २ ३ २ ३ २उ ३ २ ३ १ २ ३ १ २ ३ १२
प्रक्षस्य वृष्णो अरुषस्य नूमहः प्रनो वचो विदथा जातवेदसे ।
३ १ २ ३ १ २र ३ २ ३ १ २ ३ १ २ ३ १ २
वैश्वानराय मतिर्नव्यसे शुचिः सोम इव पवते चारुरग्नये ॥ वाम-
कट्याम् । वस्त्रम्० । आचमनीयम्० ।
२ २र ३ १ २ ३ २ ३ २ ३ २ ३ १ २ १ २
प्रकाव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति । महि-
३ २ २ ३ २ ३ १ २ ३ २ ३क २र ३ १ २
व्रतः शुचिबन्धुः पावकः पदा वराहो अभ्येति रेभन् ॥ दक्षिणक-
ट्याम् । यज्ञोपवीतम्० । आचमनीयम्० ।
३ १ २ ३ १ २ ३ २ ३ १ २ २ २र ३ १ २
सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात् । स भूमिँ सर्वतो

